# सिद्धान्तकौमुदी-

## स्त्रीप्रत्ययान्तप्रयोगविचारः
(कोशदृष्ट्या)



-डॉ. ब्रह्मानन्द शुक्लः

# सिद्धान्तकौमुदी-
## स्त्रीप्रत्ययान्तप्रयोगविचारः
(कोशदृष्ट्या)

लेखकः
**डॉ० ब्रह्मानन्द शुक्लः**
प्राचार्यः
श्रीमती भागीरथी ट्रस्ट आदर्श संस्कृत महाविद्यालयः
चरणाद्रिः (चुनार) मीरजापुरम्

♦♦♦

सम्पादकः
**बलभद्र शुक्लः**




प्रकाशकः
**शारदा-संस्कृत-संस्थानम्**
जगतगंज, वाराणसी-२२१००२

# समर्पणम्

महामहोपाध्यायानां-राष्ट्रपतिसम्मानितानां
व्याकरणन्यायवेदान्तसांख्यादिदर्शनशास्त्रमर्मज्ञानां
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय वेदवेदाङ्गसंकायाध्यक्षचराणाम्-
अभिनवपाणिनिकल्पानाम्-अस्मद्विद्याऽऽयुष्यादिसर्वविधकल्याणसम्पादकानां-
प्राचीनशास्त्राध्ययनाध्यापनपरम्परासंरक्षणतत्पराणाम्-
आचार्यश्रीचरणानां-पूज्यपूज्यानां-गुरुवर्याणां पं० रामयत्नशुक्लमहोदयानां
कराब्जयो: ग्रन्थरत्नं सश्रद्धं समर्प्यते-

-ब्रह्मानन्दशुक्लेन

# प्रस्तावना

"वेदोऽखिलो धर्म्ममूलमिति" भणिति र्यथा विद्यते। तथैव वेदोऽखिलज्ञानमूलमित्यप्यङ्गीक्रियते शेमुषीकैः। अपि च

"प्रत्यक्षेणानुमित्सा वा यस्तूपायो न विद्यते।

एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता" इत्यपि प्रतिपादितमभियुक्तैः। वेदार्थ परिज्ञानाय महर्षिभिः षडङ्गान्यपि वेदस्य छन्दःकल्पज्योतिषनिरुक्तशिक्षा व्याकरणरूपाणि विरचतानि। एतेषु षट्स्वङ्गेषु प्रधानं व्याकरणम्। वेदस्य मुखरूपत्वात्। अतएव सकल शास्त्र मूलभूतं व्याकरणमङ्गीकृतं विद्यारसिकैः। यद्यपि पुराऐन्द्रचान्द्रकाशकृत्स्नकौमार-शाकटायन सारस्वतापिशब्लशाकलेति व्याकरणानि आसन् किन्तु साम्प्रत पाणिनिव्याकरणमेव प्रामुख्येन वेदाङ्गपदवीं धारयति।

अर्थज्ञानाय यानि प्रवृत्तितत्वानि तेषां बोधकाः शब्दा एव वर्त्तन्ते तेषां शब्दानां च तत्त्वज्ञानं व्याकरणमेव कारयति व्याकरणं हि सर्वशास्त्रो पकारकम्। प्रतिपादयत्येवं भर्तृहरिः-

**"अर्थप्रवृत्तितत्वानां शब्दा एव निन्धनम्।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते।।**
**तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।**

*(वा०प०१।१३-१४)*

पाणिनीय व्याकरणस्य साम्प्रतं मार्गद्वयं विद्यते। प्रथमः अष्टाध्यायी क्रम मार्गः अपरश्च प्रक्रियाक्रम मार्गः। यद्यपि व्याकरणाध्यनस्यैते उभेऽपि मार्गे समुचिते स्तः। तत्रापि अष्टाध्यायीक्रममार्गः सर्वविधज्ञानाय सम्यग् विद्यते तथापि अद्यतने समये सरलया पदधत्त्या यथाप्रकरणमनुज्ञातुं प्रक्रियाक्रम मार्गोव्याकरणाध्यायनस्य समुचितः प्रतीयते। प्रक्रिया ज्ञानायापि

यद्यप्यनेकेग्रन्था: रूपमालारुपावतारप्रक्रिया कौमुदीप्रभृतय: सन्ति तथापि महामहोपाध्याय भट्टोजिदीक्षित विरचितसिद्धान्त कौमुदीग्रन्थ: सर्वानतिशेते। सिद्धान्तकौमुद्या: एतन्महद वैशिष्टयं यत् सर्वेऽपि महान्तो वैयाकरणा: भट्टोजिदीक्षितोत्तरवर्त्तित: स्वटीकया तं ग्रन्थं भूषयामासु:। स्वयं दीक्षितोऽपि तत्र प्रौढ़मनोरमानाम्नीं टीकां विहितवान् यश्च स्वतन्त्रो ग्रन्थ एव विद्यते। तस्मिन्नेव प्रौढमनोरमा टीका ग्रन्थे शब्दरत्ननामकं व्याख्यानं भट्टोजीदीक्षित पौत्रो रचितवान्। तस्य शिष्यो नागेश भट्टोऽपि सिद्धान्त कौमुदीमधिकृत्य शब्देन्दुशेखरं (बृहच्छब्देन्दुशेखरं लघुशब्देन्दुशेखरं) ग्रन्थं लिखितवान्। तत्रैव वासुदेव दीक्षितोबाल मनोरमा नाम्नीं व्याख्यां लिखितवान्। भट्टोजिदीक्षितशिष्यो ज्ञानेन्द्र सरस्वतीआदौ तत्त्वबोधिनी नाम्नीं व्याख्यां सर्वथा पूर्व लिखितवान्। एता व्याख्याश्च प्राचीना:। अधुना अपि विद्वांसो विविधाषु भाषाषु एतस्य ग्रन्थस्य व्याख्यां लिखन्ति लिखितवन्तश्च। सिद्धान्तकौमुदीस्थोदाहरन्णानि अध्यात्म स्वरुपमपि धारयन्ति। यथा प्रथममुदाहरणं अच् सन्धौ सुध्युपास्य: इति प्रकृतिभावसन्धौ एहि कृष्ण ३ अत्र गौश्चरति इति हल्सन्धौ रामश्शेते, विसर्गसन्धौ विष्णुस्त्राता, स्वादिसन्धौ शिवोऽर्च्य: अजन्त पुंल्लिगें राम: स्त्रीलिङ्गे रमा, नपुंसक लिङ्गे, ज्ञानम् हलन्तपुंलिङ्गे लिट् स्त्रीलिङ्गे उपानत् नपुंसकलिङ्गे स्वनुडुत् इत्यादीनि उदाहरणानि सन्ति। एतेषामुदाहरणानां किमपि रहस्य मपि भवितु मर्हति इत्यस्मिन् विषयेऽद्यावधि समये न कश्चन विचारितवान्। किन्तु प्राप्ते समये कश्चन विद्वान् समुत्पद्यत एव किञ्चिद् विशिष्टं विधातुम्।

आचार्य ब्रह्मानन्द शुक्ल: शब्दशास्त्रे कृतभूरि परिश्रम: विविध महर्षिकल्प-गुरुभ्योऽधीतव्याकरणविद्यो गुरुणा माज्ञयैव वैयाकरणसिद्धान्त कौमुदीस्थ सप्रयोगाणां (स्त्रीप्रत्ययान्त भागस्थानां) सम्यग् विवेचनं विदितवान्। तेषां विवेचनाऽपि ग्रन्थक्रमेण अकारादिक्रमेण च यद्यपि विधातुं शक्यते। तथापि सरलकरीत्या परिज्ञनाय अध्ययने सौ कर्याय च विद्वद्वरेण्योदाहरणसमीक्षणायाकरादिक्रम एवाङ्गीकृत:।

यद्यपि सामान्येन सर्वाव्यपि उदाहरणानि सूत्रार्थ बोधाय सूत्रद्वारा शब्दपरिज्ञानायैव भवन्ति। तेषां किमपि विशिष्टमन्यत् स्वरूपं विवेचनविषयो न भवति तथापि विद्वांसो विषयेषु नाविन्यमाधातुं समुत्सुका: कुशलाश्च भवन्त्येव। इतिधिया शुक्लमहोदय: कार्यमिदं विधातुं मनासि विचार्थ कार्यमिदं विहितवान्। एतस्य किञ्चि दवैशिष्यटत्र्यभव कनीयं विद्यते विद्वद् वरेण्यै:। शुक्लमहोदयो ग्रन्थेऽस्मिन् द्वादष्ट्यधिकषट्शतान्युदाहरणानि व्याख्यानाम् समाश्रितवान्।

शब्दानां पर्यायवाचिन एव शब्दास्ते कोशग्रन्थेषु संलग्ना: भवन्ति। तत्रैव तेषामनेकेऽर्था अपि बोधिता भवन्ति। केषुचित कोशग्रन्थेषु च शब्दानां व्युत्पत्तयोऽपयनेका बोधिता भवन्ति। आचार्य ब्रह्मानन्दशुक्ल: एतानुपलब्ध कोशग्रन्था नुसृत्य सिद्धान्त कौमुदीस्थ सप्रयोगायामध्ययनं कृतवान्। तेषु एकमुहादहरणरणमित्थमस्ति–

'अ'

'अ' इति प्रयोग: सिद्धान्तकौमुद्याम् अव्ययप्रकरणे चादिगणे विद्यते। तत्रायमव्ययशब्द:। अ इति वासुदेववाचकोऽनव्ययशब्दोऽपि विद्यते। अवति रक्षति प्रीणाति जनान् इति अ: इत्येवं डप्रत्ययान्त: 'नञ्' इत्येवं रूपेण 'अ' इति गृह्यते चेत् तदा स्वरादिषु पाठदव्ययं भवति। मेदिनी कोशे लिखितं यत्

**''अ शब्द: स्यादभावेऽपि स्वल्पार्थप्रतिषेधयो:।**

**अनुकम्पायाञ्च तथा वासुदेवे त्वनव्ययम् ।।''** मेदिनी १७८/२

अभावस्य पर्याय: इत्यमरे कोशे (३।४।४१) एवं वाचस्पत्यकोषे चापि अभावार्थकोऽयं स्वीकृत:। वाचस्पत्येऽन्येऽप्यर्था बोधिता: अ = अनन्त:, अ = क्षेपे - अ पचासि त्वं जाल्म। उपसर्गविभक्तिप्रतिरुपकाश्चेति स्वरादिगण सूत्रे च अ इति सिद्धान्तकौमुद्यामुदाहृतम् मनोरमायां च 'अ' सम्बोधने अधिक्षेपे निषेधे च व्याख्यातम्। अमरकोषे 'अभावे नह्य नो नापि'' ३।४।११।। इत्यस्य व्याख्याने टीकायां नञादेशोऽयमित्युक्तम्। स च आदेश न ख नमुच्यादि भिन्न शब्द घटके हलादे शब्दे परे भवति। स तु नञ् एव स्थानितुल्यार्थकत्वात् आदेशरूपेण अ इति। तमेवार्थ कथयति। नञर्थाश्च–

**''तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता।**

**अप्राशस्त्यं विरोधश्च नञर्था: षट् प्रकीर्तिता:''**

एतेषामुदाहरमानि एवम्भूतानि-तत् सादृश्यम् = अब्राह्मण: ब्राह्मणाभिन्न ब्राह्मण सदृश: क्षत्रियादि: अभाव: अघट: = घटाभाववत् भूतलम् तदन्यत्वम् अपटो घट: पटभिन्नो घट:। तदल्पता अनुदरी कन्या = अल्पोदरा। अप्राशसयम् ब्राह्मणोऽमितिप्रयोग:। विरोध: असुर: = सुरविरुद्ध:. न ञ् इत्यरूप सर्वत्र अभावे भेदे च शक्ति: सादृश्यादौ च तस्य निरुढा लक्षणेति बोध्यम्। तत्र अघटमित्यादौ अल्पाक्रपीभावे अधन इत्यादौ बहुव्रीहौ भावकृदन्तोत्तरपदके ज्ञाने अभेद: अज्ञानमित्यादौ नञ्तत्परुषे च अभावबोधकता। कृदन्तोर पदभिन्नस्थले च अघट इत्यादौ भिन्नबोधकता चापि भवति। अत्रेदं बोध्यम्

समाने हलादावुतरपदे नञः स्थाने 'अ' इत्यादेशविधानेन समास एवास्य नञो न लोपो नञः ६।३।७३ इत्यनेन भवति। शेपेऽर्थे तु 'नञो नलोपस्तिङिक्षेपे इत्यनेन भवति अपचसित्वंजाल्म इत्यादौ।

विष्णोरर्थे तु 'अ' इत्यस्येत्थं व्युत्पत्तिः अवति रक्षिति इति अतति = सातत्येन गच्छति, अव रक्षणे, अत सातत्य गमने वा धातोःडप्रत्यये सति 'अ' इति निष्पद्यते। नानार्थकोषे एतस्य अनेकेऽर्थाः निर्दिष्टाः–

**अकारो विष्ण्वीशकमठेष्वङ्गने रणे।**
**गौरवेऽन्तः पुरे देतौ भूषणे प्रावृडमेढ्रयोः।।**
**सुखज्ञान मुपरति गिरिभूमिद्रुमादिषु।**
**मृगसिंहवराहेषु तरक्षगवयेषु च।।**

एते समेऽप्यर्थाः व्युत्पत्ति दृष्ट्या शुक्लमहोदयेन स्वग्रन्थे प्रदर्शिताः। ग्रन्थेऽस्मिन् व्युत्पत्तिमाध्यमेन सिद्धान्तकौमुदीस्थ प्रयोगाणां कोशग्रन्थैरर्थप्रदर्शन पुरसरं शब्दाः यथा व्याख्याताः तादृशं स्वरूपं मन्यत्र समग्रतया नावलोक्यते। ग्रन्थोऽयं व्युत्पत्तिज्ञानाय पर्यायशब्दपरिज्ञानाय च विदुषां, छात्राणां तत्त्वबुभत्सानां समेषां कृते संग्रहणीयो भविष्यतीत्याशासे। प्रार्थये चान्नपूर्णाविश्वेशौ यद् ग्रन्थोऽयं महती यशस्राशिमाप्नुयादिति शम्।

कार्तिक पूर्णिमा
सं.२०७०

विदुषां स्नेहपात्रम्
प्रो०भगवतशरण शुक्लः
आचार्यो व्याकरणविभागः
काशी हिन्दू विश्वविद्यालये
वाराणसी

# भूमिका

अनन्तकोटि ब्रह्माण्डाधीशस्य श्रीमतोऽनादिनिधनस्य सर्वज्ञस्य परमब्रह्म परमात्मन: सम्पूर्ण सत्तावधि सर्वेऽपि जीवधारिण: न केवलमैहिकमेव परञ्च निरतिशयानन्ददं परमात्मसामीप्य सायुज्यादि रूपं पुरुषार्थ चतुष्टय श्रेष्ठतमं जन्ममरणादि जन्यकष्टनिवारकं मुक्तिदं शाश्वतं सुखमेव सततं कामयन्ते। तत्प्राप्तिसाधनभूत श्रुतिस्मृत्यादि सच्छास्त्रानुमोदित धर्म कर्म सम्पादनमथ चतुरशीति लक्षयोनिषु परम दुर्लभं मानव शरीरं समवाप्य स्व स्व मुक्ति भगवद् भक्तिकामा अनेक जन्मसु निरतिशयं प्रयतमानेष्वपि बहुषु प्राणिषु केचन एव तल्लाभनोत्ममानव जन्मन: सार्थक्येकृतकामा: सञ्जायज्यते। श्रुतिस्मृत्यादि सच्छास्त्र ज्ञानञ्च शब्दार्थ लिंगादिबोधक समस्तकारणभूत सत्कोषज्ञानाधीनम् साकल्येन तज्ज्ञानञ्च प्रकृति प्रत्यय तत्तदर्थ बोधक स्वरादि सम्प्रापक व्याकरण ज्ञानायत्तम्। एकस्यापि शब्दस्य ज्ञानं सर्वत्र आनन्ददायकं भवति तदुक्तं भगवता पतञ्जलिना महाभाष्ये पस्पाशह्निके–

**एक: शब्द: समयग्ज्ञात: सुप्रयुक्त: स्वर्गे लोके च कामधुग्भवति।**

व्याकरणञ्च शब्द साधुत्वबोधक: सूत्रत्मको लक्ष्यलक्षणात्मको ग्रन्थविशेष: तदुक्तं महाभाष्ये पशपशाह्निके लक्ष्यलक्षणं व्याकरणम् , लक्ष्यं च लक्षणञ्चैतत् समुदितं व्याकरणं भवति किम्पुनर्लक्ष्यं किम्पुनर्लक्षणञ्च? शब्दो लक्ष्य: सूत्रं लक्षणमिति।

व्याकरणशब्दस्य व्युत्पत्ति: व्याक्रियन्ते व्युत्पाद्यन्ते असाधु शब्देभ्य: साधु शब्दा: पृथक् क्रियन्ते अनेनेति व्याकरणम्। व्याकरणमपि बहुविधम् –

**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्।।**

इत्युक्त्या नव संख्याकानि। स्फोटायनम् पौषरसादि दौर्गम, हैमम्, कातन्त्रम्, इत्यादिन्यापि श्रूयन्ते।

सत्ष्वपि बहुषु व्याकरणान्तरेषु अद्यत्वे पाणिनीयस्यैव वेदागंत्वम्। अन्यत्र वैदिकानां लौकिकानाञ्च समेषां व्युत्पादनाभावात्। अस्यैव वेदमूलकत्वाच्च। ऋक्तन्त्रव्याकरणे इदमक्षरच्छन्दो वर्णश:समनुक्रान्तं यथाचार्या ऊचुर्ब्रह्मा वृहस्पतये प्रोवाच वृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाजऋषिभ्य:ऋषयो ब्राह्मणोभ्यस्तं खल्विममक्षर समाम्नायमित्याचक्षते, न भुक्त्वा न नवतं प्रब्रूयाद् ब्रह्मराशि: इति ब्रह्मराशिरित्यस्य ब्रह्मप्रतिपादको वर्णराशिरित्यर्थ:। वेदनां वेद: इति श्रुतेरस्य वेदमूलकत्वम्।

**कृते तु मानवाधर्मास्त्रेतायां गौतमा: स्मृता:।**

**द्वापरे शंखलिखिता: कलौ पाराशरा: स्मृता:।।**

इति व्यवस्थायां। अद्यत्वे शब्दसाधुत्वासाधुत्वव्यवस्थापि पाणिनीय व्याकरणानुसारेणैव विधेया। त्दुक्तं पाराशरोपपुराणे–

**पाणिनीयं महाशास्त्रं पदसाधुत्व लक्षणम्।**

**सर्वोपकारकंग्राह्यं कृत्सनं् त्याज्यंनकिञ्चन।।**

पाणिनीयव्याकरणेनैव साधुत्वासाधुत्वनिर्णय: इति भाष्येऽपि ध्वनितम् -

कथन्तर्हि इमे शब्दा: प्रतिपत्तव्या:। किञ्चित सामान्य विशेषवल्लक्षणं प्रवर्त्यम्। येनाल्पेन यत्नेन महतोमहत: शब्दोधान् प्रतिपद्येरन्। किम्पुनस्तत्। उत्सर्गापवादौ कश्चिदुत्सर्ग कर्तव्य: कश्चिदपवाद:।

अद्यत्वे व्याकरणान्तरस्य साधुत्व निर्णायकत्वे शब्दानां प्रतिपत्तौ यत्नस्य कृतत्वेन भाष्योक्त प्रश्नोत्तरयो: असंगत्युदुवरिव स्यादिति पाणिनीयव्याकरणस्यावश्यकत्वम्।

संस्कृतव्याकरण क्षेत्रे पाणिनि: युग पुरुष रूपेणावतीर्ण:। तेन व्याकरणं निर्माय संस्कृतस्यमार्गदर्शनं कृतम् अयंवैदिक लौकिकयोभयो: साहित्ययो: सूक्ष्मविवेचन पुरस्सरमध्ययनं कृत्वा उभयोर्मध्ये एतादृशं तादात्म्यं स्थापितम् येन् संस्कृतभाषाया: परिष्कृतं रूपं चिरस्थायितामलभत। वैदिक प्रयोगाणां साधुत्वं प्रतिपादयन् लौकिकप्रयोगानपि शृखला वद्धमकरोत्। सम्बन्धेऽस्मिन्नस्य व्यापकं दृष्टिकोणमासीत्। प्राय: सर्वेषां शब्दानां व्याकरणानुसारं साधुत्वं विधाय जगतो बहूपकार: कृत:। फलस्वरूपेण जनसाधारणे पाणिनीयव्याकरणमेव संस्कृतव्याकरणस्यापर पर्याय: अभूत् सम्पूर्णविश्व: अस्य व्याकरणस्य प्रौढ़ प्रामणिकता स्वीकरोति।

महर्षि पाणिने: कालनिर्णये नाद्यापि विदुषां मतैक्यता। युधिष्ठिर मीमांसक: पाणिने: समयमीशात: २८०० वर्ष पूर्वं निर्धारयति। महामहिम पण्डित गिरधर शर्माचतुर्वेद: १२०० ईशवीत: पूर्वं स्वीकारोति। अस्य विदुषोऽयं तर्क: यद् पाणिनि कात्ययन पतञ्जलीनां ५०० वर्षान्तरेण भवितव्यम्। पतन्जले: काल: ईशात: २००वर्ष पूर्वं स्वीकारेण ७०० ई०पू० कात्यायनस्य समयस्तथा च १२०० ई०पू० पाणिने: समय: भवति। डाक्टर गोल्स्टकर डाक्टर वेलवलकरौ पाणिने समयं ७०० ई०पू० स्वीकुरत:। आभ्यामितरिक्त: डा०वासुदेवशरणाग्रवाल ५०० ई०पू० निर्धारयति। आधुनिका: विद्वांस: निष्कर्षेऽस्मिन् दृढा: सन्ति यत् पाणिनिकाल: ईशात: ७०० वर्षप्रागस्ति।

महर्षिपाणिनिना स्वप्रतिभाबलेन अष्टकस्य रचना कृता। ग्रन्थेऽस्मिन् अष्टावध्याया: सन्ति प्रत्यध्याये चत्वार: पादा: सन्ति। प्रतिपादस्य सूत्रणां संख्या परस्परंभिन्नास्ति। व्याकरणप्रक्रियानुसारेण अष्टक: त्रिषु भागेषु विभक्तो वर्तते।

(१) वाक्येभ्य: पद संकलनम् (प्रथमाध्यायत: द्वितीयाध्याय पर्यन्तम्)

(२) पदानां प्रकृति प्रत्ययविभाग: (तृतीयाध्यायत: पञ्चमाध्यायं यावत्)

(३) प्रकृति प्रत्ययै: सह आदेशगामदीनां निष्पत्ति: (षष्ठ अध्यायादष्टमाध्याय पर्यन्तम्)

तदनुसारमष्टकस्य प्रथमाध्याये शास्त्रीयव्यवहारोपयोगि शब्दानां संकलनमस्ति। एतदतिरिक्त उपपादि संज्ञा: तत्तत् प्रकरणेषु कथिता: सन्ति। संज्ञाभि: सह परिभाषासादृश्येनेतासमापि समावेशोऽस्ति, द्वितीयाध्याये समास-कारक सूत्रणां तृतीयाध्याये कृत्य कृत् प्रत्ययानां विवरणमस्ति। षष्ठाध्याये तिङन्त सन्धि तथा स्वर सम्बधिन:नियमा: सन्ति। सप्तमाध्याय: अंगाधिकार नाम्ना प्रसिद्धोऽस्ति। अन्तिमे चाष्टमे अध्यायेद्वित्वविधान स्वर वैदिक प्रक्रिया सन्धि प्रकरण षत्वणत्वं विधायक सूत्राणां समावेशोऽस्ति। परिशिष्टे धातुपाठ: गणपाठ: उणादिसूत्रं लिंगानुशासनं शिक्षासूत्रादिनि च पाणिनि विरचितनीति विदुषां निर्णय:।

पाणिनि: जाम्ववतीविजय नामक काव्यमपि लिखितवान्। युधिष्ठिर मीमांसकानुसारमस्य महर्षे: द्विरूप कोष: ग्रन्थ: इण्डिया आफिस पुस्तकालये लन्दन नगरे सुरक्षित: अस्ति। अस्य कृते शालातुरीय शब्दव्यवहारेण एषां पूर्वजा: शालातुर ग्राम निवासिन: आसन्नित्यनुमीयते पुरातत्वविदनुसारं पेशावरे अटक समीपे लाहुर ग्राम प्राचीन शालातुर: आसीत्। अस्य गुरव: उपवर्षाचार्या: आसन्, तक्षशिलायामनेन विद्याधीता।

कात्यायन:–वार्तिकाराणां मध्ये कात्यायन: श्रेष्ठतमोऽस्ति। महाभाष्ये मुख्यतया कायात्यम वार्तिकानमेव व्याख्यानमस्ति। महाभाष्ये पतञ्जलिना कात्यायन: स्पष्टरूपेण वार्तिककार: कथित:। भगवता पतञ्जलिना वार्तिकमुत्थाय सूत्राणां तेषामावश्यकता नावश्यकतोपारि विचार: कृत:। पाणिनिप्रत्युक्तानेक वैदिक तथा प्राचीनलौकिक शब्दानां साधुता वार्तिकैरेव भवति। अयं दक्षिणात्य आसीदस्य प्रमाणं महाभाष्ये उल्लिखितो वर्तते तद्यथा–

प्रियतद्धिता: दक्षिणात्या:। यथा लोके वेदे च प्रयोक्तव्ये लौकिक वैदिकेषु प्रयुज्जते। अधिकाधिक विद्धांस: अस्य काल: ईशाया: पञ्चम शताब्दी मन्यन्ते।

अनेन वार्तिकादतिरिक्ता अन्येऽपि ग्रन्था: लिखिता: तथाहि–

(१) स्वर्गारोहणम् - महाभाष्येऽप्यस्योल्लेखो वर्तते। महाराज समुद्रगुप्तेन कृष्णचरितस्य मुनि वर्णने लिखितम् यथा–

य: स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि।
काव्येन रुचिरेणैव ख्यातो वररुचि: कवि:।।
न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरित वार्तिकैर्य:।
काव्येऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौकविकर्मदक्षा:।
कात्यायनस्यैव संज्ञा वररुचिरप्यस्ति।

(२) कात्यायन स्मृति:।

(३) उभयसारिका (भाषा)

(४) भ्राज श्लोक:

युधिष्ठिर मीमांसक: कथयतिव्याकरण शास्त्रस्येतिहासे-आफ्रवटकृत हस्तलेख सूचीपत्रे कात्यायन कृत अनेके ग्रन्था: उदधृता: सन्ति।

**पतञ्जलि:**—पाणिनि व्याकरणस्य सर्वांगीण पोषक महर्षि पतन्जलि: गोणिका पुत्र: गोनदीर्य (गोडाया:) निवासी आसीत। शेष रूपेणावतीर्णो व्याकरणे महती व्याख्यां लिखितवान्, सैव व्याख्या महाभाष्यनाम्ना प्रसिद्धावर्तते। भोजराजस्य प्रसिद्धोक्तया योगसूत्र व्याकरणमहाभाष्य चरकसंहितेत्यादि ग्रन्थानां प्रणेता अयमेव पतञ्जलि: आसीत्। तद्यथा–

**योगेन चित्तस्य पदेन वाचां**

**मलं शरीरस्य च वैद्येकन।**

**यो व्याकरोत्तं प्रवरं मुनीनां।**

**पतञ्जलिं प्राञ्जलिरानतोऽस्मि।।**

भगवान् पतञ्जलि: कदा प्रादुर्भूत:। प्रश्नेऽस्मिन् इतिहासज्ञ विदुषां नास्तीदानीमपि मतैक्यम्। विस्तारभीते: नात्रविशेषरूपेण लिख्यते। किन्तु युधिष्ठिर मीमांसककृतव्याकरण-शास्त्रस्येतिहास द्वारा निर्धारितमेतद् महाभाष्यकार पतञ्जलि: विक्रमाद्वात् १२०० वर्ष पूर्वमासीदिति निश्प्रचम्।

**अनेन विदुषा अन्येऽपि ग्रन्था: लिखिता:।**

१. महानन्दकाव्यम्

२. चरक परिष्कार:

३. कोष:

४. सांख्यशास्त्रम्

५. रसशास्त्रम्

६. लौहशास्त्रम्

सम्प्रति त्रय: ग्रन्था: समुपलब्धा सन्ति।

१. निदान सूक्तम्

२. योगदर्शनम्

३. महाभाष्यम्

सांख्यशास्त्र रसशास्त्र लौहशास्त्र ग्रन्थेषु कस्य कस्य ग्रन्थस्य रचना महाभाष्यकार पतन्जलिना कृतेति नास्तिनिर्णीतम्।

महर्षिपतन्जलेरनन्तरं पाणिनि शाखायां वैयाकरणानां मध्ये द्वे परम्परे बभूबतु:। अष्टाध्यायी परम्परा, प्रक्रियानुसारि परम्परा च। अष्टाध्याध्या: सूत्र क्रमानुसारव्याख्यानं काशिका वृत्तिग्रन्थोऽस्ति। अस्या: प्रणेतारौ वामन जयादित्यौ विद्वांसौ स्त:। आदित: पञ्चमाध्याय पर्यन्तं जयादित्येन व्याख्या कृता, अवशिष्ट त्रयाणामध्यायाणां व्याख्या

वामनेन पूर्णाकृता। जयदित्यादपेक्षा वामनस्य व्याख्याने प्रौढत्वमस्ति। काशिकायां सर्वेषां पाणिनि सूत्राणां व्याख्यानमस्ति, वार्तिकानामपि प्रकृतस्वरूपं काशिकायामेव दृश्यते। काशिकायामेव तादृशानामपि ग्रन्थानामुल्लेखोऽस्ति। ये इदानीं न प्राप्नुवन्ति। काशिकाया: द्वे व्याख्ये स्त:।

(१) जिनेन्द्रबुद्धि कृत काशिकाविवरण पञ्जिका या हि न्यासनाम्ना प्रसिद्धास्ति।

(२) हरदत्तकृत पदमञ्जरी अस्ति। न्यास व्याख्या पाण्डित्यपूर्णास्ति। व्याख्यासु प्रसंगे श्रीभर्तृहरिकृत वाक्यपदीयस्यापि उल्लेखोऽस्ति। ग्रन्थेऽस्मिन् व्याकरणस्यदार्शनिक: पक्षोऽस्ति। भर्तृहरिणामहाभाष्यस्यापि टीका कृता, या हि सर्वप्राचीना टीकास्ति। भर्तृहरे: समाधिस्थल: चुनारगढ़े अद्यापि प्रसिद्धो वर्तते।

सूत्रानुसारिव्याख्यानेषु कैयटोऽपि स्मरणीय: येन महाभाष्यस्य प्रदीप टीका कृता। कैयटेन सहैव सूत्रानुसारिव्याख्यान परम्परा समाप्तिगता। तत: पाणिनीयव्याकरणस्य प्रक्रियानुसारं वर्गीकरणभभूत्।

प्रक्रियानुसारिव्याख्याग्रन्थेषु श्रीधर्मकीर्ति: रूपावतार नामकं ग्रन्थं व्यरचयत्। तत: विमलसरस्वती प्रयोगानुसारं रूपमाता नाम्नी व्याख्यां लिखितवान्। तत: रामचन्द्रेण प्रक्रिया कौमुदी नामकग्रन्थ: विरचित:।

तदनु फणिभाषित भाष्याव्धे: भट्टोजिदीक्षित: शब्दकौस्तुभस्योद्धातारो नवनोन्मेष शालिनीं विशिष्टां प्रतिभमादधाना: प्रगाढ् पाण्डित्या विलक्षणशेमुषीकाशत्र वाराणसीमधिवसन्तो भवन्त: श्री भट्टोजिदीक्षिता: वैयाकरणसिद्धान्त कौमुदी ति नाम्ना सुप्रसिद्धां धातुगणोणादिपाणिनीय लिंगानुशासनाद्यशेषसूत्रव्याख्यानोदाहरण प्रत्युदाहरादि सहितां विरचय्यविद्वजनांपुर: समुपस्थापयन। संस्कृत वाङ्मयेवैदुष्यमभिलषतां सिद्धान्तकौमुद्या अध्ययनमतीवाश्यकम्। तत्र भवान् भट्टोजिदीक्षितो विक्रमार्क षोडश शताब्दयां जनिमलभतेति निश्चितप्राप्यम्। पूर्वार्द्धेउत्तरार्द्धे वा जन्मेतिसन्दिग्धम्। ग्रन्थनिर्मान्तु तस्या: शताब्द्या: उत्तरार्द्धे एवेति बहवोऽभिप्रयन्ति। अस्य महापुरुषस्य पितुर्नाम श्रीलक्ष्मीधर आसीत्। अयं महाराष्ट्रिय ब्राह्मण: इति वहव:। सारस्वत ब्रह्मण: इति केचित्। युधिष्ठिरमीमांसक स्तु महाराष्ट्रिय एव निश्चिनोति। अस्य महाभागस्य सम्पूर्णायु: प्रायेण काश्यामेव व्यतीत इति विद्वत्सु प्रसिद्धाभ्य: किंवदन्तीभ्य: प्रसिद्ध्यति। काश्यां बंगालीटोला नामके भागे अस्य महाभागस्य बहुकालं यावत् भवनमासीदित्यपिविद्वांस:

कथयन्ति। अस्य गुरुवः श्रीशेषकृष्णमहोदयाः आसन्। वैयाकरणसिद्धान्तकौमुद्या अतिरिक्त अस्या एव व्याख्या प्रौढमनोरमा, शब्दकौस्तुभः वैयाकरणभूषणकारिकचेति व्याकरणे प्रसिद्धाः अस्य ग्रन्थाः। तत्वकौस्तुभख्योऽद्वैतवेदान्तप्रतिपादकोदर्शन ग्रन्थोऽप्येतद्रचितः। धर्मशास्त्रे तु कालनिर्णय प्रवरनिर्णय त्रिस्थलीसेतु चतुर्विंशति मतव्याख्या प्रभृतयो दशैकदशाः ग्रन्थाः एतद्रचिताः सन्ति।

वैयाकरणसिद्धान्तकौमुद्याः प्रौढमनोरमा व्याख्यानन्तरं श्रीज्ञानेन्द्रसरस्वती तत्वबोधनीनाम्नी व्याख्यां लिखितवान्। अयं भट्टोजिदीक्षितस्य शिष्य आसीदिति प्रसरति विद्वत्सु किवंदन्ती, किन्तु युधिष्ठिर मीमांसकः वामनेन्द्र स्वामिनः शिष्यं श्रीदीक्षितं प्रतिपादयति। प्रायशः प्रौढमनोरमाक्षराणामेव व्याख्यायामुद्धरणात् सम्भाव्यते चेयम्, यत् भट्टोजिदीक्षितस्यैव शिष्यःयदीदं सत्यन्तर्हि दीक्षितसमकालोऽयामिति निश्चितमेव। अन्यापि कौमुद्याः प्राचीनटीकाः सन्ति।

तद्यथा– श्रीनीलकण्ठवाजपेयी कृत - सुखबोधिनी

श्री रामानन्दकृत - तत्वदीपिका

श्री नागेशभट्टकृत - वृहत्शब्देन्दुशेखरः, लघुशब्देन्दुशेखरश्च

श्रीरामकृष्णकृत - रत्नाकर

श्री रंगनाथयज्वाकृत - पूर्णिमा

श्री वासुदेव दीक्षित् - बालमनोरमेत्यादि

अनेकासु टीकासु मध्ये बालमनोरमाटीकायाः तत्वबोधिन्याश्चैव सर्वत्र समादरः दरीदृश्यते। बालमनोरमा टीकाकारेण श्री वासुदेवदीक्षितेन अन्ते यल्लिखितन्तेन ज्ञायते यदस्य पितुर्नाम महादेववाजपेयी मातुर्नाम चान्नपूर्णासीत्। श्रीवासुदेवदीक्षितः आनन्दरायविद्वत्सार्व-भौमस्याध्वर्युश्चासीत्। आनन्दरायश्चायं श्रीशाह जी, शरमजी, तुक्को जीति नामधेयानां त्रयाणां चोल देशाधिपतीनां मन्त्रिपद कार्य निरवहत्। एषां समयः १६८४ खीस्ताद्वादरभ्य १७३६ खीस्ताब्दपर्यन्तं निर्धारितस्तेन स एव समयः श्रीदीक्षितस्यापि भवितुमर्हति।

वैयाकरणसिद्धान्तकौमुद्याः टीकासु श्रीसभापति शर्मोपाध्यास्य लक्ष्मी टीकायामपि प्रौढ पाण्डित्यं स्पष्टं दरीदृश्यते। बालानां सुखपूर्वकबोधाय वैयाकरण सिद्धान्तकौमुद्यां सारल्येन प्रवेशायेदानीमपि बहबः वैयाकरण विद्वासः टीकाः कुर्वन्ति। कौमुद्याः समादरः इदानीं सर्वत्रैव परिलक्ष्यते। कौमुद्याः कृते एतादृशी युक्तिः सर्वत्र प्रचलित यथा-

**कौमुदि यदि कण्ठस्था वृथा भाष्ये परिश्रमः।**
**कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः।**

इत्यादि।

इदानीं शास्त्रयाचार्य परीक्षासु वैयाकरण सिद्धान्तकौमुद्या एव टीका पाठ्यग्रन्थे निर्धारिता वर्तन्ते। आचार्य परीक्षायमपि कौमुद्या: पाठ्यग्रन्थे निर्धारिणमावश्यकमिति विद्वद्भि: विचारणीयम्।

**व्याकरणकोषयोः सम्बन्धः कोश विषयश्च–**

व्याकरणमन्तरा वाणी निर्लवण व्यजनमिव सारहीना स्वाद हीना च भवति। वाण्या: सौष्ठवं न व्याकरणमृते चेत्तार्हि तस्या: पूर्णता शब्दकोशाधीनमेवेत्यपि सत्यम्। व्याकरणे भाषाया: अखिलानां शब्दानां प्रतिपादनम् भवति, परं प्रमुखकोष ग्रन्थेषु भाषाया: सर्व शब्दानां व्याकरणानुसार व्युत्पत्तिं प्रदर्श्य तेषामर्थ: स्पष्टरूपेण प्राप्नोति। व्याकरणेन विना वाणी यथा निष्प्राणा भवति तथैव शब्दकोशं विना पंगुरपीति निश्चितम्। कोशे शब्दा: पद संज्ञा विहीना निरुपाधय शुद्धा: संकल्प्यन्ते तथा च निर्विभक्तिकाश्च भवन्ति, वाक्य प्रयोगवासरे व्याकरणानुसारेण सविभक्तिका: प्रयुज्ञन्ते। शब्देकोषाणां प्रधानविषय: शब्दस्य सर्वविधार्थप्रकाश:। शब्दकोष एव शब्दनिधि:। यथा धन कोषं विना अर्थाभावे मनुष्य: निर्धन: दरिद्रश्च भवति तेन दुखं प्राप्नोति तेनैव प्रकारेण शब्दकोषं विना शब्ददारिद्र्यमपि भवति। उक्तञ्च (शब्दरत्नसमन्वयकोष प्रस्तावना पृ० १) यथा–

**कोशश्चैव महीपानां कोषश्च विदुषामपि।**
**उपयोगो महान्यस्मात् क्लेशस्तेन बिना भवेत्।**

यद्यपि शब्दकोष विषय: निस्वाद: नीरस: अरुचि करश्चास्ति किन्तु सत्साहित्य प्रयोगे कोशशब्दा: रुचिकरा: सुस्वादव: सरसाश्चभवन्ति। शब्द: भाषाया: शरीरंमर्थश्चात्मा। शब्द रचना व्याकरणविषय: किन्त्वर्थ ज्ञानं कोशविषय:। अर्थस्य परिपूर्ण ज्ञानमृते शब्दप्रयोगो न केवलं भयावहोऽपितु प्रयोक्तृ हास्यकरोऽपि भवति।

**एतेन व्याकरणकोशयोः अन्योन्याश्रयःसम्बन्धः सिद्धयति।**

**कोषाणामुपादेयता–**

लोकव्यवहारे शब्दानामवदानेन प्रदानेन शब्दानामभिनवसर्जनेन शब्दानुशासनानुसारन्च शब्दव्युत्पत्ति विज्ञानेन यस्यशब्दनिधेर्विरचना भवति तस्यैव लिंग निर्देश पुरस्सरं व्याख्यानं

प्रथितं प्रयोजनम्। कोषः प्राकृत जनान् भाषाया:शब्दानां शब्दानुशासहीनानां नियम विरुद्धानामसम्बद्धानान्च प्रयोगेभ्यः वारयति। कोषस्य प्रमुखविषयः शब्दास्यार्थ परिज्ञानमस्ति। कोषः शब्दस्यात्मानं स्वरुपं विवृत्य दर्शयति। कस्यापि शब्दस्यार्थ विवरणं सम्यकरुपेण कोषेणैव भवति। कोषेण विद्वांस एकस्यशब्दस्य अनेकार्थ कथनेन यादृशमानन्द मनुभवन्ति इत्यनुभवगम्य एव नतु वाण्या विषयः। यदि कोषः नस्यात्तर्हि तदानन्द प्राप्तिः कथं भवेदित्यपि संस्कृतकोषाणमुपादेयता।

**कोष शब्दस्य व्युत्पत्तिः—**

कोश शब्दे मूर्धन्यषकारः तालव्यशकारश्चास्तिशब्दकल्पद्रुमे। उभावपि शुद्धौ स्तः। तद् व्युत्पत्तिर्यथा-कुष्यते इति। कुष निष्कर्षे धातोः अर्कतरि च (पा०सू०३।३।१९) कारके संज्ञयामितिघञ् प्रत्ययः। अथवा कुश्यते इति। कुश् संश्लेषणे धातोः पूर्वसूत्रेणैव घञ् प्रत्ययः। कोषः शब्दस्यान्येऽप्यर्थासंकलिताकल्पद्रुमे तत्रैव यथा-अण्डमिति शब्दरत्नावली। भाण्डागारं पानपात्रचषकः योनिः शिम्बेति हेमचन्द्रः। पनसादि फलास्यान्तः इति धरणी। शब्दान्तर संयोगे गोलकवाचकः यथा सूत्रकोषः नेत्रकोषः इत्यादि। धनसंहतिः इति जटाधरः। वेदान्तशास्त्रस्योक्त स्थूलसूक्ष्मादिभेदेन शरीरत्रयावच्छिन्न अन्नमयः प्राणमयः मनोमयः। विज्ञानमयआनन्दमयश्चेत्येते पञ्चकोष पदाच्छादकत्वादात्मनः कोषतयोच्यते। कृताकृतमिति हेमरुप्यं तत्पर्यायोहिरण्य मित्यमरः। कृताकृतं हेमरूप्यञ्च मिलितं प्रत्येकन्च कोषदिद्वयवाच्यम्। कृतमावर्तितमकृतमाकरोत्थं चूर्ण घटितमितिस्वामी। कृतमामरणीकृतमकृतं चूर्णादिरूपमाकरो त्थमितिकेचित्। आवरण शेषे यथा भागवते-

**अव्यक्तमाहुर्हृदयं मनश्च स चन्द्रमासर्वविकार कोषः।**

मुकुलेऽर्थे यथा रघुः (३।८)-

**तिरश्चकारभ्रमराभिलीनयोः**

**सुजातयो पंकज कोषयो श्रियम्।**

खड्गपिधाने यथा महाभारते

**कस्यायं विपुलः खड्गो गव्ये कोशे समर्पितः**

अर्थसमूहे यथा रघु

**तमध्वरे विश्वजिति क्षितीशं**

**निःशेष विश्राणित कोषभाजम्।**

दिव्ये यथा राजतरंगिण्याम् (५।३३५)–

**ततो निक्षिप्यचरणं रक्ताक्ते मेषचर्मणि।**

**कोशं चक्रतुरन्योन्यं सखंगो नृपडामरे।।**

जायित्री अर्थेऽप्स्य व्यवहारो भवति। एवमेव मेदिन्यादिषु कोशेषु। वाचस्पत्ये बहुपृष्ठेषु कोष शब्दे लिखितमस्ति।

**संस्कृत कोशानामितिहासः–**

ब्राह्मणग्रन्थेषु ऋग्वेदादि संहितानां यज्ञक्रिया निर्वाहार्थं विहितं व्याख्यान विद्यते। एषा ब्राह्मणग्रन्थीया व्याख्या मनुष्य वि[illegible]ं परिधिसीमितन्च यज्ञसीमितस्य ब्रह्मणः स्वरूपं प्रयच्छति ब्रह्मण उद्भूतस्य ब्राह्मणशब्दस्य निरुक्तिरस्यैव शब्दस्य सूक्ष्मतमंरूपम् धारयति उपनिषत्सु ब्रह्मभावोत्पादकस्य यज्ञस्य परब्रह्म भावोत्पादक पर्यवसानं स्पष्टंदृश्यते, दिग्दर्शनमात्र मेतद् वेदविषयक व्याख्यान विधानस्य।

वैदिक शब्दस्य व्याख्यायै विविध प्रकारकाः अनेके ग्रन्थाः विरचिता अभूवन्। तेषामेकमात्रं निघण्टुः अवशिष्टः। निघण्टुः पन्च खण्डात्मकः। प्रथमाध्याये पृथिवीहिरण्य अन्तरिक्ष साधारण रश्मि दिग् रात्रि उषस् अहन् मेधवाक् उदक् नदी अश्व आदिष्टोपयोजन ज्वलति कर्माज्यवलतोनामादि सप्तदशानां शब्दानां पर्यायाः सन्ति। द्वितीयाध्याये-कर्मनाम अपत्यनाम मनुष्यनाम बाहुनाम अंगुलिनाम कान्ति कर्मा अन्ननाम अधिकर्मा बलनाम धननाम गौनाम कुध्यतिकर्मा क्रोधनाम गतिकर्मा क्षिप्रनाम आलकनाम व्याप्तिकर्मा वधकर्मा वज्रनाम ऐश्वर्यकर्मा ईश्वरनामादि द्वाविशंति शब्दानां पर्यायाः सन्ति। तृतीयाध्याये बहुह्रस्व महत् गृहादीनामेक विंशति शब्दानां पर्यायाः गृहीता। चतुर्थाध्याये द्वाषष्टि चतुस्तमशीति द्वात्रिंशत्छत पदानां संकलमस्ति। अन्तिमे पन्चमाध्याये चत्रयोदश षट त्रिंशत् एकत्रिंशत पदानां संग्रहो विद्यते। प्रथमद्वितीयतृतीयाध्यायानामेकार्थानां शब्दानां संकलनमस्ति खण्डानाञ्च मिथस्तारतम्यमपि दृश्यते किन्तु चतुर्थपन्चम खण्डयोः संकलितस्य पदसन्दोहस्य कुत्रापि पारस्परिकः सम्बन्धोन दृश्यते। निघण्टु ग्रन्थेषु प्रतिपादितेषु शब्देषु केचनस्पृष्टा केचन्चास्यसृष्टाः दृश्यन्तो। प्रस्तुतस्य निघण्टु ग्रन्थस्य सम्यगनुशीलनान्तरमपि जिज्ञासुरध्येता वेदानां विहितं सम्पूर्णज्ञानं न प्राप्नोति। अत अनुमीयते यत् वर्तमान् निघण्टु ग्रन्थात् विपुलतरः ग्रन्थः निघण्टुः आसीत् परं चात्रान कुत्रापि समुपलभ्यते।

यास्को मुनिः अस्मिन्नेव निघण्टुग्रन्थे निरुक्तं विरच्य वैदिक मन्त्राणामुदाहरणानि च समुपन्नस्य शब्दानां रुचिरं व्याख्यानं कृतवान्। महामुनि यास्यकेनैतादृशीव्याख्याप्रणाली समुपन्यस्ता यामनुसृज्य वेदार्थ जिज्ञासुरध्येता वेदार्थनुगमने समर्थो भवति। अस्याः प्रणाल्या एवायं परिणामो यदन्य निघण्टु ग्रन्थाः स्तु समयवशाल्लोपं गताः किन्त्वयमवशिष्टऽयम् यास्कस्य समयः विदुषां मते पाणिनि समय एव निर्धारितो भवति।

यास्कमुनि कृतनिरुक्तस्यारम्भे कथितमस्ति समाम्नायः समाम्नातः सव्याख्यातव्यः ताममं समान्नायं निघण्टुवः इत्याचक्षते। समाम्नायः समाम्नातः इति वचनेन ज्ञायते यत् समाम्नायो महत्मनो यास्कस्यैव काचिद्रचनासीत्। यस्याः व्याख्याः निरुक्त नाम्ना तेन महोदयेन कृता। निघण्टुग्रन्थस्यैव प्रक्रियोत्तरकालिकैः कौशकारैःस्वीकृता। श्रीअमरसिंहस्य द्वितीयः श्लोक अमुंसिद्धान्तं समर्थयति–

**समाहृत्यान्य तन्त्राणि संक्षिप्तैः प्रतिसंस्कृतैः**

**सम्पूर्णमुच्यते वर्गैर्नामलिगांनुशासनम्।**

अमरकोष टीकाकारः श्री सर्वानन्दः ब्रूते यदमरसिंहेनामरकोष रचना पूर्ववार्तिना व्याडि, भागरि धन्वन्तरि वररूचि प्रभृतीनां कोषकाराणां तन्त्रेभ्यः साहाप्यं नीत्वा कृता। एतत्कोष निर्माणकाल एनं पुरतः त्रिकाण्डोत्पालिनी रत्नकोषमालेत्यादि कोषाः आसन्। सर्वश्री महेश्वरपुरषोत्तमदेव हेमचन्द्राणामुक्त्या अमरसिंहेन कात्यस्य अथवा कात्यायनस्य वाचस्पतेश्च कृतीनामुपयोगः कृतः। रायमुकुटः अमरकोषस्येकोदाहरणं शब्दार्णवात् गृहीतम स्तीति व्यवहरन्ति।

अमरचन्द्रेणापि काव्यकल्पलताख्य ग्रन्थे व्यादिक्रतो त्पलिनी ग्रन्थाद् सामग्री ग्रहीतेति कथयित्वैकमुदाहरणामुदाहृतम्। हेमचन्द्रेण अभिधानचिन्तामणि टीकायां यदुक्तं तेन ज्ञायते यद् व्याडेः रचना वृहदाकारा आसीत्।

त्रिकाण्डशेषानुसारं कात्यः वामन सर्वानन्दादयः वररुश्चिचैकैव जनस्य नामानि, किन्तु प्राञ्चः विद्वांसः हर्षवर्धन वामन सर्वानन्दादयः समवेत स्वरेण भिन्नं भिन्नं मन्यन्ते। इमे विद्वांसः लिंगानुशासनं वररुचेः कृतिः इति स्वीकुर्वन्ति अमरकोषस्य व्याख्याकारः क्षीरस्वामी कथयति यन्नाममालायः एकोभागः कात्यस्य रचना विद्यते। कात्यरचिते कोशे एकार्थानेकार्थाश्च शब्दाः संकलिताः सन्ति।

सायन: धातुवृत्ति रचनायां भागुरे: शब्दकोषस्यैकं श्लोकमुद्धृतवान्। अमरकोशस्य सर्वानन्दरायमुकटादय: टीकाकारा: स्व स्व टीकासु भागुरि शब्दकोषादनेकोदाहरणानि ग्रहीतवन्त:।

हेमचन्द्र: अभिधानचिन्तामणे: टीकाया आरम्भे वाचस्पतिं प्रामाणिक कोशकारुपेण प्रणमति। अत: ज्ञायते यत् वाचस्पति: हेमचन्द्रात् प्राचीनकोशकार:। पुरुषोत्तमदेवस्य त्रिकाण्डशेष हारावलीत्यादि शब्दकोषा: सर्वानन्दात् पूर्वमेव लिखिता आसन्। त्रिकाण्डकोष: प्राय: अमरकोश वदेवास्ति। हारावल्यां सप्तत्यधिदिक शतद्वय संख्यकानां प्रचलित शब्दानां संग्रहोऽस्ति। शाश्वतकृत शाश्वतकोशानेकार्थ समन्वये ८०० अनुष्टुपछन्दसां समावेशोऽस्ति। प्राय अस्मिन्नेकार्थ शब्दानामेव संग्रहो विद्यते। अयं षट्सु खंडेषु विभक्तो वर्तते। भट्ट हलायुधस्याभिधानरत्नमालाया पञ्चकाण्डा: सन्ति एषां संज्ञा क्रमश: स्वर भूमि पाताल सामान्यानेकार्थाचास्ति। एषु काण्डेषु नवशत् संख्याकानि: पद्यानि: सन्ति।

यादव प्रकाश विरचित वैजयन्ती कोष: द्वयो: भागयो: विभक्तोऽस्ति ययो: एकार्थानेकार्थनान्चशब्दानां संग्रहो वर्तते। एकार्थे खण्डे स्वर्गान्तरिक्ष भूमि पाताल सामान्यादि पञ्चकाण्डा: सन्ति। अनेकार्थ भागश्च द्व्यक्षर त्र्यक्षर शेषाख्येषुत्रिकाण्डेषु विभक्त:। वृहदाकारस्यास्य ग्रन्थस्य सम्पादनं जी आपर्ट महोदयेन १८९३ ईशवीमे मद्रासत: कृतंकैश्चिदुच्यते यद् यादवप्रकाश: स्वामिन: श्रीरामानुजाचार्यस्य शिष्य आसीत्।

महेश्वरविरचित विश्वप्रकाश: कोशोऽस्ति। अयमनुष्टुप् छन्दसु लिखित:। इदानीमपि पठन पाठनेऽस्योपयोग: भवति।

तारापालविरचित ग्रन्थ इदानीं नोपलभ्यते। अयमनुष्टुप् छन्दसु लिखित:। इदानीमपि पठन पाठनेऽस्योपयोग: भवति।

तारापालविरचित ग्रन्थ इदानीं नोपलभ्यते। क्षीरस्वामी हेमचन्द्रश्च दुर्गस्य नाममालाख्य शब्दकोषात् बहून्युदाहरणानि ग्रहीतवन्तौ। धनञ्जय रचितनाममालायां त्रयोऽध्याया: सन्ति। अथ जैनमतलम्बी दिगम्बर आसीत्। अनेन काव्यमपि रचितम्।

धरणिदास: स्वकीय कोषस्य विभाजनम् अन्तिम शब्दानां व्यञ्जनध्वनिं समाश्रित्य शब्दानामक्षराणान्च संख्याया आधारेएकाक्षर यक्षर त्र्यक्षर शब्दानुक्त्वा सरल सरणिमनुसृत्य कृतवान्। अजयकोष इव अयमप्यस्ति।

कोशकार धर्मस्य विषये मेदिनी कोशेऽनेके संकेताः समुपलभन्ते। क्षीरस्वामी हेमचन्द्रौ मुनिनामधेयस्य कोशकारस्य नाम समादरेण भक्त्या चोच्चोतिरतवन्तौ।

रन्तिदेवस्य रचना रन्तिकोशाभिधानमस्ति। अस्मिन्नप्येकार्थानेकार्थाश्च शब्दसंग्रहिताःसन्ति। रभसोऽथवा रभसपाल अमरसिंहादन्तरमभूत्। अस्य ग्रन्थस्योपयोगः क्षीरस्वामिना पर्यायमात्रे कृतः। सर्वानन्द मल्लिनाथमेदिनीकाराः स्वस्व ग्रन्थेषु रुद्रकोशात् प्रमाणं ददति। एतेन ज्ञायते यदयमपि कोषः सुप्रसिद्धः प्रमाणिकश्चासीत्। हलायुधमेदिनी महेश्वराः वोपालितस्य नामादरेण उच्चारितवन्तः। अस्य कोषस्याधारः लिंगानुशासनमस्ति। अस्य कोषस्य एको भागः आर्या छन्दःसुलिखितः।

प्रख्यातनामा जैनमुनिः हेमचन्द्र १०८६तः११२५ ई० पर्यन्तं राजा गयासिंह कुमारपालस्य च राज्यकाले विद्यमान आसीत्। अयमेव महामुनिः कलिकाल सर्वज्ञ नाम्नापि ज्ञायते। अनेन चतुर्णा कोषाणांरचना कृता।

१. अभिधानचिन्तामणिः।

२. अनेकार्थ संग्रहः।

३. निघण्टुः शेषः।

४. देशीनामामाल। च।

एषु प्रथमः समानार्थकः शब्दकोशः द्वितीयः अनेकार्थः तृतीयः औषधिकोशः चतुर्थः प्राकृत शब्दकोषश्चास्ति। अभिधानचिन्तामणिकोशः षट् काण्डेषु विभक्तो वर्तते। तेकाण्डाश्च देवाधिदेव देवमर्त्य भूमिनाटक सामान्याः सन्ति। अस्य टीका हेमचन्द्रेणापि कृता।

केशवस्वामी विरचिते नानार्थार्णवे संक्षेपतः ५६०० पद्येषु नानार्थानां शब्दानांसंकलनमस्ति। आद्याक्षराणामाधोरऽस्य रचना सम्पन्नाजाता।

जटाधरेण स्वीय कोशस्य रचना अभिधानतन्त्राख्यस्य अमरकोषमाधारी कृत्य कृता। अयं वंगप्रदेशस्य चिटगांव ग्रामस्य निवासी आसीत्। रायमुकुटात् पूर्वमेवास्य जनिःअभूत्।

गदासिंह रचितायां नानार्थध्वनिमञ्जर्याम् ८८ श्लोकाः सन्ति। गदासिंहेन स्वरचनायां रुद्र गंगाधर धरणिरत्न कोषाणां नामानि संकीर्तितानि सन्ति।

रूपचन्द्रकृत रूपमञ्जरीनाममाला कोषस्य प्रणयनं १५८८ ईशवीये वत्सरेऽभूत्। अस्मिन्नेव काले पुण्डरीक विट्ठलः शीघ्रवोधनाममाला कोषं रचितवान्।

हर्षकीर्तिः षोडषशताब्दयाः अन्तिमेभागे शारदीयाख्यानाममालयाः संकलनं कृतवान्। गमनभट्टस्य चन्द्रिकायाः शब्दरत्नाकारस्य च रचना अस्मिनेव कालेऽभूत्।

अप्ययदीक्षित विरचिते नाममाला संग्रहे एकार्थक शब्दानां पर्यायाः सन्ति।

षट्काण्डोपेत लिंगनिर्धारक नियमसंयुतश्च कोषः सहजकीर्तिना १६७५ ईशवीये रचितः। अनेन १६८६ ई० वत्सरे लोध्रकटकस्य समीपे महामुनेः जिनस्य वन्दनां कवितारूपेण विरचितवान्।

केशवस्य कल्पद्रुकोषाख्यायां रचनायां ४००० संख्याकाः श्लोकाः सन्ति। एकार्थाणामेव शब्दानां विपुलतरः भण्डारः एषः ग्रन्थः।

महेशविद्यालंकारः १६६८ तमे ईश्वीयवत्सरे अमरकोषे सारसुन्दरी नाम्नीं टीकां व्यलिखत्। तस्य रचना शब्दरत्नावली अस्ति तस्या अधिकांशो भाग अमर इव वर्तते। नारायणपुत्रस्य विश्वनाथस्य कृतौ एकार्थनिकार्थक शब्दानां चयनमस्ति। विश्वानाथेन स्वग्रन्थे महेश हेमचन्द्र मेदिनी विषयेऽनेके संकेताः प्रदत्ताः।

सुजनेन नानार्थपेटिका कोषः रचितः। महेश्वरस्य कृतौ पर्याय रत्नमालायां त्रयः परिच्छेदाः सन्ति। एषु समानार्थकानां शब्दानामेव समावेशोऽस्ति।

धनञ्जय भट्टाचार्ययस्य पर्याय शब्दरत्नाकराख्यायां रचनायां त्रयस्तरंगाः सन्ति। धनन्जयोऽस्मिन् ग्रन्थे नागेशस्य लघुशब्देन्दुशेखरस्य रप्रत्याहारसंकेतोऽपि कृतवान्।

महादेवसुतः सारस्वतमितस्य विश्वमोहिनी नाम्निग्रन्थे त्रयः काण्डाः सन्ति। विश्वकवि प्रणीते विश्वनिघण्टु शब्दकोशे त्रय आश्वासाः सन्ति। एषु नानार्थाकानां शब्दानां संकलनमस्ति। एतदतिरिक्तं श्रीमल्लभट्टः आख्यातचिन्तामणिः क्रियाकोशः महादेववेदान्तिनः आदिकोषः सौरमिनः एकार्थ रत्नमालां द्व्यक्षरनाममाला राधवकपेः कोषावतंसः भेजस्य नाममाला त्र्यम्बकमित्रस्य विशेषामृतोनाम कोषः सहानी महोदयस्य शब्दरत्न समुच्चयस्य कर्वापुरस्य संस्कृत पारसीप्रकाशः शिवदत्तकवेश्च विश्वकोषश्च शब्दकोष परम्परायां विशिष्टं स्थानं विदधति।

राज्ञः राधाकान्तदेवस्य शब्द कल्पद्रुमः १८२२ ततः ५८ संवत्सरे प्रकाशनमलभत। स्वर्गीय कल्पद्रुमसनिधानेयो यत् प्रार्थयते तस्य तत्प्राप्तिर्भवति। तादृशमेव शब्दकल्पद्रुम समीपे यानि यानि शब्दादीनि प्रार्थयन्ते तानि तानि प्राप्नुवन्ति। अतः कल्पवृक्षसादृशः एवास्ति। मिथिलाभिषानिक शास्त्रिक लौकिक व्यावहारिक साधुशब्दानां धातुगणनाञ्च झ टिति प्राप्तये तेषामानुपूर्विकाकारादि हकारान्तपञ्चाशद् वर्णानां यथाक्रमं सूचीं कृत्वा विन्यासोऽस्ति कोशेऽस्मिन्।

उपर्युक्त कोशादर्श: मत्वा सुखानन्द: स्वग्रन्थं शब्दार्थ चिन्तामणि चतुर्थ खण्डेषु विरचितवान्।

संस्कृतसाहित्ये विशालकाय: ग्रन्थ: वाचस्पत्यम् तारानाथभट्टाचार्येर्ण लिखित: शब्दकल्पद्रुमादपि कस्मिन् कस्मिन् शब्दविषये अनेनाधिकं लिखितम् आदौ शब्दानामधिकं व्याख्यानं विधते पश्चात् संक्षेपेण च व्याख्यानमस्ति ग्रन्थेऽस्मिन्।

कतिपय एकाक्षरा अपि कोषकारा: सन्ति। तेषु केषाञ्चित् कोशकाराणां ग्रन्थपरिचय: प्रस्तूयते। तत्र श्री पुरुषोत्तम देवस्यैकाक्षर कोष: अभिधानसंग्रह: रुचि विरचित एकाक्षराभिधान कोश:। विश्वशम्भु प्रणीतैकाक्षरमाला १८६७ तमे वर्षे कराची नगरत: प्रकाशितो वर्तते। सुधाकलशरचितैकाक्षरनाम माला चतुर्दशशताकया: पूर्वार्ध संकलनमालेभे। राज्ञो हरिहरस्य मन्त्रिणा माधवेन रचितैकाक्षरनाममाला स्वरव्यन्जन संयुक्ताक्षराणावर्णानां शब्दानामाधारे वर्तते। ग्रन्थेस्मिन् त्रय: काण्डा: सन्ति।

प्राचीननकोशेषु केचन्नेदानीं प्राप्नुवन्ति पुस्तकालयेषु सरस्वतीभवनपुस्तकालय: सम्पूर्णानन्द संस्कृत विश्वविद्यालय वाराणसी : श्रीमती भागीरथी ट्रस्ट आदर्श संस्कृत महाविद्यालय चुनार, मिर्जापुर एवं श्रीरामानुज संस्कृत महाविद्यालय वाराणसी इत्यादिषु येकोशा: समुपलब्धा: तेषामेव साहाय्येन शोधग्रन्थोऽयं पूर्णातांगत:। अस्य शोधग्रन्थस्य प्रकाशने डॉ० भगवत् शरण शुक्ल महोदया: आचार्या: काशीहिन्दूविश्वविद्यालये विशेष रूपेण प्रणम्या: यै: प्रस्तावनामुल्लिख्यास्य ग्रन्थस्य गौरव: समेधित: एवञ्च एतेषामेवमान्यानां महानुभावानां प्रेरणया मुद्रणं जातमृतदर्थमहं प्रणमीमि। ममाग्रजान् श्रीनन्दकिशोर शुक्लादि महोदयान् प्रणमामि श्रीमती भागीरथी ट्रस्ट आदर्श संस्कृत महाविद्यालयस्य प्रबन्धका: श्री त्रिपुरारि शङ्कर महोदया: श्री आनन्द प्रसाद अग्रवाल महोदया: सादरं प्रणम्यन्तो। येषां साहाप्ययेन ग्रन्थोऽयं पूर्णतां गत:। मदन्तेवासिनच्छात्रा तथा च तत्रैव वैयाकरणा: श्रीकाशीप्रसाद मिश्रा सस्नेहेन संयुज्यन्ते एवञ्च येनकेनापि विधिनाये अस्य कार्यस्य साधकास्त सर्वे साधुवादांर्हा। अन्ते च जानकीजानिं श्रीरामचन्द्रं प्रणमन स्तौभि। अस्य ग्रन्थस्य प्रचराय जिज्ञासु जन लाभाय च पुन: पुन: सदगुरून्नमामि।

विदुषां विनेय:

ब्रह्मानन्दशुक्ल:

# विषय-सूची





# सिद्धान्तकौमुदी-

## स्त्रीप्रत्ययान्तप्रयोगविचारः

(कोशदृष्ट्या)

# प्रथमोऽध्यायः

## ।।अ।।

अशब्दोऽव्ययः अनव्ययश्च। अयमनेकार्थोऽपि। तत्र अशब्दस्यव्युत्पत्तिश्चेत्थम्। अवतीति। अव् प्रीणनादौधातोः ड प्रत्ययः। स्वरादिपाठादव्ययत्वम्।

अशब्दः स्यादभावेऽपि स्वल्पार्थप्रतिषेधयोः।
अनुकम्पायाञ्चतथा वासुदेवे त्वनव्ययम्।।
।।इति मेदिनी।।

अभावस्य पर्यायः यथामरे (३।४।११।) अभावे न ह्यनोनापीति। वाचस्पत्येऽपि (प्र०पू०-२५) प्रायः एवमेव तत्रापि अभावे प्रतिषेधे स्वल्पेऽर्थे अनुकम्यायाम्, सम्बोधने अ अनन्त। अधिक्षेपे अपचसित्वं जात्म।। उपसर्गविभक्तिप्रतिरूपकाश्चेति स्वरादिगणसूत्रे च अ इति सिद्धान्तकौमुद्यामुदाहृतं मनोरमायाञ्च अ सम्बोधने अधिक्षेपे निषधे चेति व्याख्यातम्। अभावे नह्यनो न इत्यमरटीकायां नञादेशोऽयमित्युक्तम्। स च आदेशः नखनमुच्यादि भिन्नशब्दघटके हलादौ शब्दे परे भवति। स तु नञ एव स्थानि तुल्यार्थकत्वादादेशस्य। न ञर्थाश्च-

**तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।**
**अप्राशस्त्यं विरोधश्चनञर्थाः षट् प्रकीर्तिताः।।**

इत्युक्तेः षड्विधाः। तत्र अब्राह्मण इत्यादौ ब्राह्मण सादृश्यत्वेन क्षत्रियादीनां बोधकता अघटमित्यादौ घटाभावस्य, अपट इत्यादौ पटभिन्नस्य अनुदराकन्येत्यादौ अल्पोदरत्वस्य, अपशवो वै अन्ये गोऽश्वेभ्य इत्यादौ गवाश्वभिन्नपशूनामप्राशस्त्यस्य असुर असित इत्यादौ सुरसित विरोधस्य बोधकता। तत्रायं विशेषः-नञः सर्वत्र अभावे भेदे च शक्ति सादृश्यादौ तु निरुढ़लक्षणा। तत्र अघटमित्यादौ अव्ययीभावे, अधन इत्यादौ बहुब्रीहौ भावकृदन्तोत्तर पदके अभेदः अज्ञानमित्यादौ तत्पुरुषे च अभावबोधकता। भावकृदन्तभिश्चोत्तरपद नञ् तत्पुरुषे तु अघट इत्यादौ भिन्नस्य बोधकतेति। अत्रेदं बोध्यम्-समासे हलादौ उत्तरपदे नञः-स्थाने अ इत्यादेश विधानेन समासे वास्य न ञर्थकस्य अ इत्यस्य प्रयोगः नान्यथा, सम्बोधनाद्यर्थकस्य तु पृथक् प्रयोगः किन्तु नञो नलोपस्तिडिः क्षेपे इति वार्तिकेन तिडतपदे परेऽपि नञादेशस्य विधानात् तस्यैव पृथक् प्रयोगः।

विष्णोः अर्थे यथाव्युत्पत्तिः अवति रक्षति अतति सातत्येन तिष्ठतीति वा। अव् रक्षणे अत् सातत्यगमने वा धातोः ड प्रत्ययः। अस्यानेकार्थाः यथा नानार्थरत्नमालायाम् (नानार्थ र० श्लोक०-१-२)

**अकारोविष्णवीशकमठेष्वङ्णेष्वडनेरणे।**
**गौरवेऽन्तः पुरे हेतौ भूषणे प्रावृड् मेढ्रयोः।।**
**सुखज्ञानमुपाराति गिरिभूमिद्रमादिषु।**
**मृगसिंह वराहेषु तरक्षगवेष्यवपि।।**

प्रायः एवमेवान्य कोशेषु।

**अकेशा—**नास्ति केशो यस्याः अल्पः अप्रशस्तो वा केशो यस्याः। स्वाङ्गाच्चेति प्राप्त डीपः सहनञिति (पा०सू०-४।१।५७) निषेधः। अस्य पर्यायः यथा कल्पद्रुमे (प्र०पृ०४।) केशरहिता, अल्पकेशयुक्ता अप्रशस्तकेशविशिष्टा वा। प्राय एवमेवान्यकोशेष्वपि। केश शब्दस्य व्युत्पतिर्यथा-क्लिश्यते। क्लिश् बन्धे क्लिश् उपतापे वा क्लिश् विवाधायां धातोः क्लिशेरन् ( उ०५।३३।) लो लोपश्चो केशिरसि शेते वेति व्युत्पतौ अन्येभ्योऽपीति (वा० ३।२।१०१) ड प्रत्ययः। हलन्तादित्युलुक्। (पा०सू० ६।३।९) कस्य शिरसः ईशो वेत्यपि व्युत्पत्ति र्भवितुं शक्यते। केशः स्यात् पुंसि वरुणे ह्रीवेरेकुन्तलेऽपि च हति मेदिनी। (१६२।५) अस्य पर्यायः यथामरे (२।६।९५।) चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः। केश शब्द विषये अन्येऽपि कोशेष्वप्येवमेव।

**अक्षौहिणी—**ऊहः समूहः अस्ति अस्या हति ऊहिणी। अक्षाणमूहिणीति षष्ठी समासे पूर्वपदात्सञ्ज्ञायामगः (पा० ६।१।८९) इति णत्वे अक्षादुहिन्यामुपसंख्यानामि ति वृद्धौ कृतायायक्षौहिणी शब्दो निष्पद्यते। संख्याविशेषयुक्तासेनातत् परिचयो यथा कल्पद्रुमे(प्र०पृ० ६) २१८७० हस्तिनः। २१८७० रथाः ६५६१० अश्वाः। १०९३५० पदातयः। समुदायेन २१८७००। तथाचोक्तम्-

**अक्षौहिण्यामित्यधिकैः सप्तत्यन्ताष्टभिः शतैः**
**सयुक्तानि सहस्राणि गजानामेक विंशतिः।।**
**एवमेव रथानान्तु संख्यानं कीर्तितं बुधैः।**
**पञ्चषष्टिसहस्राणि षट् शतानि दशैव तु।।**
**संख्यातास्तुरगातज्ञै बिना रथ्यैस्तुरङ्गमैः।**
**नृणां शतसहस्त्रन्तु सहस्राणि नवैव तु।**
**शतानि त्रीणि चान्यानि पञ्चाशच्च पदातयः।।** (इत्यमरभारतौ)

कल्पद्रुमेएव महाभारतान्तर्गतपरिमाणपि अस्ति तद्यथा—

*सौतिरुवाच*–**एको रथो गजश्चैको नराः पञ्च पदातयः।**
**त्रयश्च तुरगास्तज्ज्ञै पतिरित्यभिधीयते।।**
**पतिन्तु त्रिगुणामेतामाहुः सेनामुखं बुधाः।**
**त्रीनि सेनामुखान्येको गुल्म इत्यभिधीयते।।**
**त्रयो गुल्मा गणो नाम वाहिनी त गणास्त्रयः।**
**स्मृतास्तिस्रस्तु वाहिन्याः पृतनेति विचक्षणैः।।**
**चमूस्तु पृतनास्तिस्त्रः तिसृचम्वास्तत्वनीकिनी।**
**अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः।।**
**अक्षौहिण्याः प्रसंख्याता रथानां द्विजसतमाः।**
**संख्या गणितत्वज्ञैः सहस्रान्येक विंशतिः।।**
**शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः।**
**गजानाञ्च परीमाणमेतदेव विर्निदिशेत्।।**
**ज्ञेयं शत सहस्रन्तु सहस्त्राणि नवैव तु।**
**नराणमापि पञ्चाशत् शतानि त्रीणि चानघाः।।**
**पञ्चषष्टि सहस्राणि तथाश्वानां शतानि च।**
**दशोत्तराणि षट् प्राहुर्यथावदिह सङ्ख्या।।**
**एतामक्षौहिणीं प्राहुः संख्यातत्वविदोजनाः।**
**यथा कथितवानस्मि विस्तरेण तपोधनाः।।**

प्रायः एवमेव गणना वाचस्पत्येऽपि। (प्र० पृ०४४) केचितु अक्षौहिणी शब्दमन्यथा व्युत्पादयन्ति तद्यथा सर्वेषामक्षाणामिन्द्रियाणां समूहः सविकल्मकं ज्ञानमक्षोहः सोऽस्ति अस्या इति विग्रहे इनिः। अकृतव्यूह परिभाषया गुणं वाधित्वा वृद्धिः इति वदन्ति। तन्न समीचीनतामर्हति ऊहिनी शब्देन विग्रहे वृद्धेश्चरितार्थत्वात्। एवमेवामिधानचिन्तामणौ (७४८।) अमरादिष्वपि।। (२।८।८१)।

**अग्नायी**–अग्नेः स्त्री इत्यर्थे वृषाकप्याग्नि (पा०सू० ४।१।३७।) इत्यैङ ङीप् च कृते आयादेशे अग्नायीशब्दो निष्पद्यते। तथाचामरः (२।७।२१) अथाग्नायी स्वाहा च हुत भुक् प्रिया। कल्पद्रुमे (प्र० पृ.८) यथा त्रेतायुगमिति जटाधरः। वाचस्पत्ये तत्परिचयो यथा सा च दक्षकन्या तस्याश्चाग्निप्रियताकथा यथा महाभारते-

**दक्षस्याहं प्रिया कन्या स्वाहानाम महाभुज्।**
**बाल्यात्प्रभृति नित्यञ्च जातकामा हुताशने।।**

**स न मे कामनां पुत्र! सम्यक् जानाति पावकः।**
**इच्छामि शाश्वतं वासं वस्तुं पुत्र सहाग्निना।।**

*स्कन्द उवाच–*

**हव्यं कव्य ञ्च यत् किञ्चित् द्विजानाप्य संस्कृतम्।**
**होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्ता समुधृतम्।**
**अद्य प्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः।**
**एवमाग्निस्तया सार्धं सदा वत्स्यति शोभने।**
**प्रायएवमेव हलायुधादिष्वपि।** (हला०-१०६)

**अग्निः**–अङ्०गयन्ति अग्रयं जन्म प्रापयन्ति इति व्युत्पत्था हविः प्रक्षेपाधिकरणेणु गार्हपत्या हवनीय दक्षिणाग्नि सभ्यावसथ्यौपासनाख्येषु षडग्निषु। यद्वा अङ्गयति ऊर्ध्वं गच्छतीति। तन्निष्पतिर्यथा-अगि गतौ धातौः अङ्०गेर्नलोपेश्चेति निः नलोपश्च। तेजः पदार्थविशेषः। अत्रकल्पद्रुमः (प्र० पृ.८) धर्मस्य वसुभार्यायां जातः प्रथमोऽग्निः। तस्य पत्नी स्वाहा। पुत्रास्त्रयः पावकः पवमानः शुचिः। षष्ठमन्वन्तरे अग्नेर्वसोधारायां द्रविणकादयः पुत्राः। एतेभ्यः। पञ्चचत्वारिंशदग्नयो जाताः सर्वे मिलित्वा एकोनपञ्चाशदग्नयः। इति पुराणम्। अस्य पर्यायः वैश्वानरः वन्हिः वीतिहोत्रः धनञ्जयः कृपीटयोनिः ज्वलनः जातवेदाः तनू नपात् तनूनपाः बर्हिशुष्माबर्हिः शुष्मा कृष्णवर्त्मा शुचिष्केशः उशबुधः आश्रयाशः आशयाशः वृहद्भानुः कृशानुः पावकः अनलः, रोहिताश्वः वायुसखा वायुसखः शिखावान् शिखी आशुशुक्षणिः हिरण्यरेताः हुतभुक् हव्यभुक् दहनः हव्यवाहनः सप्तार्चिः दमुनाः दमूनाः शुक्रः चित्रभानुः विभावसुः शुचिः अवित्तम्। इत्यमरस्तट्टीका (१।१।५३) च। कल्पद्रुमे तत्रैवान्योऽपि पर्यायः यथा-वृषाकपिः जुहूवालः कपिलः पिङ्गलः अरणि अमिरः पाचनः विश्वप्सा छागवहनः कृष्णार्चिः जुहूवारः उदर्चिः भास्करः वसुः शुष्मः हिमारातिः तमोनुत् सुशिखः सप्तजिह्वः अपपारिकः सर्वदेवमुखः इति जटाधरः। अस्य गुणाः वायुकफस्तम्भ शीतकम्पनाशकत्वम्। आमाशयाजनकत्वं, रक्तपित्तप्रकोपत्वञ्च इति राजवल्लभः। अपि च अग्नेर्द्धर्षणता ज्योतिस्तापः पाकः-प्रकाशनम् शोकोरोगोलघुस्तैक्ष्णं सतत ञ्चोर्द्धभासिता। इति मोक्षधर्मः। अथकर्म विशेषेऽग्निर्नामानि यथा-

**लौकिक पावको ह्यग्निः प्रथमः परिकीर्तितः।**
(लौकिके नवगृहप्रवेशादौ)

**अग्नेस्तु माकूतोनाम गर्भाधाने विधीयते।**
**पुंसवने चन्द्रनामा शुङ्गा कर्मणि शोभनः।।**

**सीमन्ते मङ्गलोनाम प्रगल्भो जातकर्मणि।**
**नाग्निः स्यात् पार्थिवो अग्निः प्राशने तु शुचिस्तथा।।**
**सत्यनामाथ चूड़ायां व्रतादेशे समुद्भवः।**

(व्रतादेशे उपनयने)

**गोदाने सूर्यनामा च केशान्ते ह्यग्निरुच्यते।।**

(गोदाने गोदानाख्य संस्कारे केशान्ते समावर्तने)

**वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः।**

(विसर्गेसाग्नि कर्तव्य कर्म विशेषे)

**चतुर्थ्यान्तुशिखीनाम धृतिरग्निस्तथापरे।।**

(चतुर्थ्या विवाहान्तेचतुर्थीहोमे अपरे धृतिहोमादौ पाकयज्ञे पाकाङ्गहोमे वृषोत्सर्ग गृहप्रतिष्ठादौ)

**लक्षहोमे च वह्निः स्यात् कोटि होमे हुताशनः।**
**पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा।।**
**पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारिके।**
**वश्यर्थे शमनो नाम वरदानेऽभिदूषकः।।**
**कोष्ठे तु जठरो नाम कव्यादोऽमृतभक्षणे;**

इति गोभिलपुत्रकृत संग्रह। अथ तस्य रूपं यथा-

**पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः।**
**छागस्थः साक्षसूत्रोऽग्निः सप्तार्चिः शक्तिधारकः।।**
**इत्यादित्यपुराणम् इत्यपि कल्पद्रुम एव।**

अत्र होमीयाग्नेः शुभलक्षणानि यथा-

**अर्चिस्मानपिण्डितशिखः सर्पिः काञ्चनसन्निभः।**
**स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात् कार्यसिद्धये।।**

*इति वायुपुराणम्।*

वैद्यकमते अग्निस्त्रिधा-भौमः दिव्यः उदर्यः, तत्राद्य काष्ठेन्धनप्रभवः ऊर्द्धज्वलनस्वभावः पचन स्वेदादि समर्थश्च। द्वितीयः उदकेन्धनः पर्यग्ज्वलनशीलोवाडवः। तृतीय उभयेन्धनः पर्यग्ज्वलनशील भुक्तस्याहारस्य रसादिपरिणामननिमितश्च वियुदादिश्च। इति विजयरक्षितोपरिसन्देहभञ्जिका। अपि च मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः। कफ़पितानिलाधिक्यात् तत् साम्याज्जाठरोऽनलः। तेषां कार्यं यथा-

**विषयो वातजान्रोगान् तीक्ष्णः पित्तनिमितजान्।**
**करोत्यग्निस्तथामन्दो विकारान् कफ सम्भवान्।।**
**समासमाग्नेरशिता मात्रा सम्यग्विपच्यते।**
**स्वल्पापि नैव मन्दाग्ने विषमाग्नेस्तु देहिनः।।**
**कदाचित् पच्यते सम्यक् कदाचिच्च न पच्यते।**
**तीक्षाग्निरिति तं विद्यात् समाग्निः श्रेष्ठ उच्यते।।**

इति माधवकरः। अत्यन्ततीक्ष्णाग्निरेव भस्मक इत्युच्यते। स तु आहाराभावे शोणितादीन् धातून् पाचयित्वा आशुमारयति। इति रक्षितः। देहजन्यादेः नादोत्पादकत्वं यथा संगीत दर्पणे -

**आत्मना प्रेरितं चित्तं वह्निमाहन्ति देहजम्।**
**ब्रह्मग्रन्थिस्थितं प्राणं स प्रेरयति पावकः।।**
**पावकः प्रेरितः सोऽथ क्रमादूर्द्ध पथेचरन्।**
**अतिसूक्ष्मध्वनिनाभौ हृदि सूक्ष्मं गले पुनः।।**
**पुष्टं शीर्षे त्वपुष्टश्च कृत्रिमं वदने तथा।**
**आविर्भावयतीत्येव पञ्चधा कीर्त्यते बुधैः।।**
**नकारं प्राणनामानं दकारमनलं विदुः।**
**जातः प्राणग्नि संयोगात् तेन नादोऽभिधीयते।।**

अग्नेः सर्वसाक्षित्वादि यथा रामायणे-

**त्वमग्ने सर्वदेवानां शरीरान्तरगोचरः।**
**त्वं साक्षी मम देहस्थस्त्राहि मा देवसत्तम्।**

यथा च भारते-

**आदित्य चन्द्रावनिलो नलश्च द्यौभूमिरापो हृदयं यमश्च।**
**अहश्च-रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्।।**

अस्य सर्वप्रथमाराध्त्वं ऋग्वेदस्य सर्वप्रथमे सूत्रे उक्तं यथा-

अग्निमीले पुरोहितमित्यादि। विष्णुः सूर्य अग्नि कोणाधिपतिः इत्यमरः। चित्रकवृक्षः रक्तचित्रकः-भल्लातकः निम्बुकः पितम् स्वर्णमिति राजनिर्घण्टः। वाचस्पत्ये (प्र०पृ०४८) यथा-अग्नौ स्वनाम प्रसिद्धे तेजोभेदे तेजसि, आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी चोत्पद्यते इति श्रुतिः। तत्र तेजः पदार्थस्तावदद्विविधः सूक्ष्मः स्थूलश्च। सूक्ष्मवायु सम्भूतः सूक्ष्मः पञ्चधाकृतस्तु स्थूलः तासां त्रिवृतं त्रिवृतमेकैकां करोतीति श्रुतौ त्रिवृतकरणस्य

पञ्चीकरणस्याप्युपलक्षणम्। तथा च भूतान्तराष्टमभागमिश्रितेन स्वस्वार्थभागेन उत्पन्नः पञ्चीकृतः। तस्य च पञ्चात्मकत्वेऽपि वैशेष्यात्तद्वाद इति। शारीरिकोक्तेः भूयस्त्वात् तेजसत्वव्यवहारः। सोऽयं स्थूलो वन्हिः प्रकारान्तरेण त्रिविधः। भौमः दिव्यः जाठरमिति भेदात्। तथ पार्थिवकाष्ठादिप्रभवः भौमः महानसाद्यग्निः, जलवायवादिभवः दिव्य विद्युदुल्कावज्रादिः। उभावपि ऊर्द्ध ज्वलन स्वभावः उदरे भवस्तृतीयः। त्रयोऽपयमीस्वसंयुक्त पाकदाह प्रकाशन समर्थाः। सर्वेप्यमी लोके शास्त्रे च बन्हि आदि शब्देनव्यवह्रियन्ते तेषां विशेष गुणाः शब्दर्स्पशरूपाणि यो यो यावतिथश्चैषां स स तावद् गुणः स्मृतः इति मनुना भूतमध्ये तृतीयस्य तेजसः त्रिगुणत्वमुक्तव्यक्तमुक्तंमहाभारते शब्दः स्पर्शश्च रूपञ्च तेजसोऽथ गुणास्त्रयः इति। अतएव बह्लेभुनुभुनुध्वनिरिति पञ्चदश्यामुक्तम् वन्हेश्च तन्ही तेजोजलभूभ्यात्मकत्वेन लोहितशुक्ल रूपत्वम्, अत एव छान्दोग्ये त्रिवृत् करणान्तरं वन्हेवरूपत्वमुक्तं यथा यदग्ने रोहितं रूपं तेज स्तद्रूपम् यच्छुक्लं तदपाम् यद्कृष्णं तदन्नस्येति विवृतञ्चैतद् भाष्यकृता यत्तद्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते। उदाहरणं नामैकदेश प्रसिद्ध्यामेव प्रसिद्धार्थमुदाह्रियत इति। तद् त्रिवृत् कृतस्य तेजसो रूपं विद्धि। तथा यच्छुक्लं रूपमग्नेः तदपाम् त्रिवृत्कृतानामेव यत् कृष्णं तस्यैवाग्नेः रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृतायाः इति विद्धीति। अत एव तत् तत् शास्त्रकाव्यादिषु वन्हेरुष्णारूपतया वर्णनं दृश्यते। अग्निमूर्तिध्याने च अरुणरूपत्वमनुपदं दर्शयिष्यते लोकेचारुणत्वेनैव प्रत्यक्षेणासावुपलभ्यते। एवञ्च नैयायिकोक्तं तेजसः शुक्ल भास्वर रुपत्वं प्रत्यक्ष वेदविरुद्धत्वादुपेक्ष्यमेव। तत्रभौमदिव्ययो प्रायशो लोकसिद्धतेन दिव्यस्याग्ने दिव्यशब्दे वक्ष्यमाणत्वाच्च जाठरे वन्हौ विशेषोऽभिधीयते। नाभेरुर्ध्व हृदयादधस्तातदामाशयमाचक्षते तद्गतं सौरं तेजः पित्तमि त्याचक्षते इति भाष्यविवरणानन्दगिरिः वैद्यकवचनत्वेनोवाच। अत एव तस्य कौक्षेय इति संज्ञा। छान्दोग्ये च याहृदयस्य नाऽस्ताः पिङ्गलाचाणिमास्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसां वा आदित्यः पिङ्गल एष शुक्लः एष नील एष पीत एष लोहित इति। व्याख्यातञ्चैतत् भाष्यकृता। अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासन संस्थानस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात् सर्वतो विनिःसृता आदित्यमण्डलादि रश्मयताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्तन्ते इत्यर्थः। तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्वत्राध्याहायम्। सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृतेनक फेनात्मन सम्पर्कात् पिङ्गलं भवति, सौरं तेजः पित्ताख्यम्। तदेव वातभूयस्त्वान्नीलं भवति। तदेव च कफभूयस्त्वात् शुक्लं कफेन समतायां पित्तम्, शोणितबाहुल्येन लोहितम्। वैद्यकानां वर्णविशेषणा अन्वेष्टव्याः। कथं

भवति इति। श्रुतिस्त्वारादित्यसंमन्धादेव तत्तेजसोनाड़ीष्वनुगतस्यैते वर्णविशेषा इति। कथमसौ आदित्यः पिङ्गलो वर्णतः एष आदित्य शुक्लोप्येष नीलः एष पीत एष लोहित आदित्य एव। तस्य चान्नरसस्य धात्वन्तर सम्पर्कवशाद् वर्णीयविशेषः इत्यानन्दागिरिः। अस्यैव जाठरस्य पिपासा हेतुत्वम् छान्दोग्ये उक्तं यथा-अथ यत्रैतत् पुरुषः पिपासतिनाम तेज एवैतत् पीतं नयते वा इति। व्याख्यातञ् च भाष्यकृता - द्रव कृतस्यासितिस्यान्नस्य नेत्रयः आपोऽन्न शुङगं देहं वलेदयन्त्यः शिथिली कुर्युः। अबाहुल्यात् यदि तेजसा न शोष्यते। नितराञ्च तेजसा शेष्यमाणास्वप्सु देहभावेन परिणाममानासु पातुमिच्छा पिपासा पुरुषस्य जायते तदा पुरुषः पिपासतिनाम, तदेवदाह तेज एव तत्तदा पीतभवादि शोषयत् देह लोहिताविभावेन नयते परिणमयतीति। तस्य रसपाकप्रकार माह योगार्णवे-

**आयुष्यं भुक्तामाहारे स वायुः कुरुते द्विधा।**
**संप्रविश्यान्नमध्यन्तु पृथक् किट्ट पृथक् जलम्।।**

(किट्टम् अन्नमलभेदम्)। अग्नेरुर्ध्व च संस्थाप्य तदन्नञ्च जलोपरि। जलस्याधः स्वयं प्राणः स्थित्वाग्निं धमते शनैः (धमते संधुक्षयति) वायुनाध्मायमानोऽग्निरत्युष्णं कुरुते जलम्। अन्नं तदुष्ण तोयेन समन्तात् पच्यते पुनः। द्विधा भवति। तत् पक्वं पृथक् किट्टं पृथक रसम्। रसेन तेन ताः नाडीः प्राणः पूरयते पुनः। प्रत्यर्पयन्ति सम्पूर्णा रसानि ताः समन्ततः इति। एवं रस पाकोत्तरं धातुपाको विहितः परार्थादर्शे। यथा-

**त्वगसृग् मांसमेदोऽस्थिमज्जशुक्राणि धातवः।**
**सप्तस्युः त्वत्र चोक्ता त्वक् रक्तजोदरवन्हिना।।**
**पङ्०काद्भवेदन्नरसा देवं रक्तादिभिस्तथा।**
**स्व स्व कोशाग्निना पाकात् प्रजायन्ते त्वगादयः।।** इति।।

एतमूलमेवतस्यात्मयोनि जरायुजाण्डजदीनि शरीराणि तानि प्रत्येकं षट् प्रकाराणि रक्तादि षट् धातु परिपाक हेतुभूत षडग्निस्थानयोनित्वेन। तथाहि अन्नरसो जाठरवन्हिना पच्यमानो रक्ततां प्रतिपद्यते रक्तः स्वकोशस्याग्निना पच्यमानं मांसत्वम्, मासंश्च स्वकोशस्थानलपरिपक्वं भेदस्त्वम्। भेदोऽपि स्वकोश वन्हिना पक्वमस्थिताम् अस्व्यपि स्वकोशशिखि परिपक्वं मज्जत्वम्। मज्जापि स्वकोशपावकपरिपच्च्यमानं चरमधातुतया परिणमते इति। जाठरस्य प्रकारान्तरेण पाचनादि दशविधकर्मकारित्वात् दशविधत्ववमुक्तं पदार्थादेशे यथा-

**भ्राज कोरञ्जकःचैव क्लेदकः स्नेहकस्तथा।**
**धारकोपन्धकस्येवद् भावकाख्यश्च सप्तमः।।**
**व्यापकः पाचकश्चैव श्लेष्मको दशधामतः।।**इति।।

वैद्यके चास्य चतुर्विध कार्यविशेषकारित्वात् चातुर्विध्यमुक्तम्। विषयश्च समस्तीक्ष्णो मन्दश्चेति चतुर्विधः कफपितानलाधिक्यात् तत् साम्याज्जाठरोऽनलः। एततु पूर्वमेवोक्तम्। अस्य उत्पत्यादिः पुराणेणु यथा वर्णित। वाचस्पत्येऽपि सङ०कलितो अस्ति। एवमेवपर्यायः अभिधानचिन्तामणौ (चि० १०९९।) शारदीयाख्यनाममलायां (३३१) पर्याय मुक्तावल्याम्। (मु० २३।३९।२६१) मेदिन्यां (मे० ८२।१) यथा- अग्निर्वैश्वानरेऽपिऽस्याच्चित्रकाख्यौषधौ पुमानिति। प्रायः अन्येषामपि कोषकाराणामेवमेव मतम्।

**अग्निमत्**—अग्निराधानामस्येति विग्रहे मतुप् प्रत्ययः। यथा विधानेनाहिताग्निके द्विजे दारास्वग्निविनिः क्षिप्य प्रवेशेदाग्निमान् द्विजः इति स्मृतिः। इति वाचस्पत्यम्। (प्र०पृ०५८।)

**अजननिः**—अस्य व्युत्पतिश्चेत्थम्- न जन इति अजन। आक्रोशे नञ्यनिः (पा०सू० ३।३।११३।) इति निन्दायां भावे अनिः। तस्याजननिरेवास्तु जननी क्लेशकारिणीति प्रसिद्धप्रयोगोऽप्यस्ति। अत्र कल्पद्रुमः। (प्र०पृ० १७) जन्मराहित्यम्, उत्पत्यभावः, अकरणिः शापः इति। वाचस्पत्ये (प्र० पृ० ८९) यथा-आक्रुश्यमाने जन्माभावे वाङीप् अजनीत्यप्यत्र अर्थाभावे अव्ययी० जनन्याभावे अव्य. इति। प्राय अन्यकोशेष्वपि एवमेव।

**अजका**—अजस्य विकारः अवयवः गलस्तनः पुरीष वा कन् प्रत्ययः। अजागलस्थे स्तनाकारे मांसपिण्डे तत्पुरीषो च इति वाचस्पत्यम्। (प्र०पृ०८८) अज शब्दस्य विशेषव्याख्या अजा प्रयोगे द्रष्टव्या।

**अजा**—अजतीति। अज् गतौ धातोः पचाद्यच् (पा०सू० ४।१।८) प्रत्ययः। अजाविभ्यामिति (तत्रैव-४।१।४) निर्देशान्न वी आदेशः। अजाद्यतष्टाबि (तत्रैव- ६।१।१०१) ति टाप् प्रत्ययः सवर्णदीर्घः। (शाश्वत ६२६ श्लो०) अत्राजाविष्णु-हरच्छागेति। (अभिधानचि० १२७५) अजा तु छागिका मञ्जा सर्वभक्षा गलस्तनी इत्यभिधानचिन्तामणिः। (प्र०पृ०१९) कल्पद्रुमे यथा-न जायते न उत्पद्यते इति व्युत्पत्तौ न उपपदे जनी प्रादुर्भावे धातोः कर्तरि ड प्रत्ययः न ञ् समासः। अत्र नञ् शब्दो शिरश्चालने। आद्याशक्ति पक्षे न निषेधार्थः। अजामेकां लोहित शुक्ल कृष्णां इति सांख्यतत्व कौमुद्याम्। माया आद्याशक्तिः इति पुराणम्। (अजामेकां लोहित कृष्ण शुक्लां वह्वीः प्रजाः सृजमानां स्वरूपाम् अजो ह्येको जुषमानोऽनुशेते जहात्येनां भुक्तभोग्यामजोऽन्यः) इति श्वेताश्वेतरोपनिषदि। औषधि भेदः यथा सुश्रुते अजा महोषधौ ज्ञेया शब्द कुन्देन्दु पाण्डुरा इति। हैमेनात्र (२।६६ एवं शारदीय ३३०) यथा - अजश्च्छागेतरे विष्णौ रघुजे वेधसि स्मरे इति।

**अतिकतरम्**—कतरमतिक्रान्तमित्यत्र अत्यादयः क्रान्ताद्यर्थे (वा० १।४।७९) इति समासः। अति शब्दस्य व्युत्पतिश्चेत्थम्- अततीति। **अतधातोः** इन् (उ० ४।११८)

प्रत्ययः। अत्रामरः (३।३।२४०।) प्रकर्षे लङ्०घनेऽव्याप्ति तत्रैव (३।३।५) पूजनेस्वती इत्यप्यस्ति। मेदिन्यां (१८०। २०) यथा अतिशब्दः प्रशंसायां प्रकर्षे लङ्घनेऽपि चेति। कल्पद्रुमे (प्र०पृ.२५) यथा- अतिशयं क्रान्तं पूजनम्, असम्भावना इति दुर्गादासः। प्रादिविंशति उपसर्गान्तर्गतोऽयम्। प्रायः एवमेव शाश्वतकोशे (७८२) वाचस्पत्यादिष्वपि। (प्र०पृ०९८)

**अतिकेशी**—केशानातिक्रान्तेति विग्रहे स्वाङ्गोच्चोपसर्जनाद (पा०सू० ४।१।५४) संयोगोपधादि ति वैकल्पिके डीष् प्रत्ययः। अतिशब्दस्य व्याख्या अतिकतरमिति शब्दे केश शब्दस्य च अकेशा इत्यत्र द्रष्टव्या।

**अतिखट्वः**—खट्वामतिक्रान्तः इति विग्रहे अत्यादय इति समासे गोस्त्रियोरुपसर्जनस्येति (पा०सू० १।२।४८) ह्रस्वे विभक्ति कार्ये निष्पन्नोऽयं शब्दः। खट्वा शब्दस्य व्युत्पत्तिर्यथा- खट्यते काङ्क्षते निद्रालुभिः। खट्व काङ्क्षायां धातोः अशू (उ० १।१५१) पुषि-इति क्वुन् प्रत्ययः। अस्य पर्यायः यथामरे (२।६।१३८) मञ्च पर्यङ्क् पल्यङ्काः खट्वया समाः। शारदीयाख्यनाममालायां (५०७) यथा- खट्वा पर्यइ०कपल्यङ्०काष्ठशल्या मञ्च मञ्चकाः शय्या च शयनं तल्पं शयनीयं च तूलिका। एवमेवाभिधानचिन्तामणौ (६८३) पर्याय मुक्तावल्यामन्यकोशेषु (२२।२।३३) च।

**अतिचमूः**—चमूमतिक्रान्तः। चमू शब्दस्य व्युत्पर्त्तिर्यथा-चमति भक्षयति शत्रून् नाशयतीति। चम् धातोः कृषिचमितनी (उ.१।८०) ति ऊ प्रत्ययः। अत्रामरः (२।८।७८) -

**ध्वजिनी वाहिनी सेनापूतनाऽनीकनीचमूः।**
**वरुथिनी बलं सैन्यं चक्रं चानीकमस्त्रियामिति।।**

अभिधानचिन्तामणौ ( ७४६) यथा-

**वाहिनी पृतनासेना बलं सैन्यमनीकनी।।**
**वरुथिनी चमूश्चक्रं स्कन्धावारोऽस्य तु स्थितिः।**
**शिविरं रचना तु स्यात् व्यूहो दण्डाधिको युधि।।**
**प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः।**
**एकैमकैरथास्त्रयश्वाः पतिः पञ्च पदातिका।।**
**सेना सेनामुखं गुल्मो वाहिनी पृतना चमूः।**
**अनाकिनी च पतेः स्यात् इमाद्यौस्त्रिगुणैः क्रमात्।**

मेदिन्यान्तु (मे० १०९।१२) चमू सेनाविशेषा च सेनामात्र च योषितीति। प्राय एवमेवशारदीयाख्यानाममालादिषु। (७०३) सेनामात्रे यथा श्रीमद् भगवद्गीतायाम् (गीता-

१।३) पश्यैतां पाण्डुपुत्राणामाचार्यः महतीं चमूमिति केचितु चमू शब्दमन्यथा व्युत्पादयन्ति यथा- चमितामिवर्धिक्यः ऊः इति। तन्नसमीचीनता मर्हति। तादृश सूत्राभावात्।

**अतिधीवरी**—धीवानमतिक्रान्तेति विग्रहे समासे वनोरचे (पा०सू०४।१।७) ति डीप् रश्च कृते अतिधीवरी इति शब्दो निष्पद्यते। धीवन् शब्दस्य व्युत्पतिर्यथा-दधातीति। डुधाञ् धारणपोषणयोः धातोः आतोम्निन (तत्रैव- ३।२।७४) अन्येभ्योऽपी (तत्रैव ३।२।७५) ति भाषायामि क्वनिप् प्रत्यये घुमास्थे (तत्रैव ६।४।६६) ति ईत्वेधीवन् इति। भाष्ये तु ध्यायतेः क्वनिपि सम्प्रसारणे हलः (तत्रैव ६।४।२) इति दीर्घे सति निष्पत्तिः।

**अतिलक्ष्मीः**—लक्ष्मीमतिक्रान्तः। लक्ष्मी शब्दस्य व्याख्या लक्ष्मी शब्दे एव द्रष्टव्या।

**अतिसुत्वरी**—सुत्वानमक्रिान्तेत्यत्र समासे ङीपि रभावे (पा०सू०-४।१।७) च कृतो अतिसुत्वरी। सुत्वन् शब्दे यथावाचस्यत्येसुनोति (वाच० प्र.पृ.५३११) स्म। षुञ् अभिषवे धातोः भूते क्वनिपि कृतसोमनिष्पीडने। अमरे (२।७।१०) यथा सुत्वात्वभिषवे कृते इति। (अभिषवे = अवभृतस्नाने) स्नातकस्यायं पर्यायः। तत्रापि रामाश्रमीटीकायां साधनिकाप्रकारः यथा-सुतवान्। षुञ् अभिषवे धातोः सुयजोङ्गोर्वनिप् (पा०सू०-३।२।१०३) तुक् (पा०सू० ६।१।७१) च।

**अतिस्त्रिः**—स्त्रियमतिक्रान्तोऽतिस्त्रिः। स्त्री शब्दस्य व्याख्या तत्रैव स्त्री शद्रे द्रष्टव्या।

**अत्यूधः**—ऊधोऽतिक्रान्तः। ऊधस् शब्दस्य व्युत्पतिर्यथा-वहतीति। वह प्रापणे धातोः उन्नीति उन्दीक्लेदने धातोः असुन् (उ० ४।१८९) प्रत्ययः। ऊधसोऽनङि (पा०सू० ५।४।१३१) निर्देशात् ऊधादेशः। अमरः (२।९।७३) ऊधस्तु क्लीवमापीनमिति। यथा महाभारते (१।१७६।१३) चैत्ररथपर्वणि-मण्डूक नेत्रां स्वाकाशं पीनोधसमनिन्दिताम्। शतपथ (२।५।१।५) ब्राह्मणे यथायदैव स्त्रियै स्तनावाप्यायेते ऊधः पशूनामिति। एवमेवाभिधानचिन्तामणौ (१२७२) हलायुधे (पृ.१८२।) वाचस्पत्यादिषु। (द्वि० पृ०१३८३।)

**अद्धा**—अव्य। अतं सततं ज्ञानं धयति दधाति वा विच् (पा०सू०-३।२।१५) प्रत्ययः। तत्वे त्वद्धाञ्जसाद्वयमित्यमरः। (३।५।१२) कल्पद्रुमे (प्र०पृ० ३३।) तु क्विप् प्रत्ययेन निष्पन्नः। वाचस्पत्ये (प्र०पृ०११७।) यथा-याथार्थ्ये, साक्षात्कारे, स्फुटेऽवधारणे अतिशये च। अयं स्वरादिः चादिश्च तेनोभय स्वरता। साक्षदिषु पाठात् अद्धाकृत्येत्यादौ समासेल्यप्। एवमेवहलायुधादिष्वपि। (११४ पृ०) श्रीमद्भागवते (७।५।२४) प्रयोगो यथा-

**इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।**
**क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्।।**

**अधर (त्रिलिङ्गेषुअयं शब्दः)-**

**न** ध्रियते कामुकस्य धैर्यमसौ। धृङ् अनवस्थाने धातोः पुंसि संज्ञायां घः प्रायेनेति (पा०सू० ३।३।११८) घ प्रत्ययः। न ञ् (पा०सू० २।३।६।) समासः। मुखावयव विशेषः। तत्पर्यायः यथामरे (२।६।९०) ओष्ठाधरौ तु रदनच्छदौदशनवाससी। मेदिन्यां (१३०।१०५) यथा- अधरस्तुपुमानोष्ठे हीनेऽतूर्ध्वे च वाच्यवदिति। कल्पद्रुमे (प्र०पृ०३६) यथा- स्मरागारं रतिगृहं योनिरिति यावत्। इति शब्दरत्नावलीत्रिकाण्डशेषश्च। नाध्रियतेऽसौ इति व्युत्पतौ मुखावयवविशेषोऽर्थो भवति। तयोरपि ओष्ठाधर प्रयोगः। यथा- रदनच्छदी दशनवाससी उभयत्रवर्तेते इत्यमरटीकायाम्। तथा ओष्ठाधरावपि उभयत्रेति नयनानन्दः इत्यपि कल्पद्रुमे-अन्यच्च तत्रैव उपरिवर्ती अधोवर्ती च ओष्ठः अधरोऽप्येवमिति रायमुकुटोऽप्याह। पुरुषस्य रक्ताधरः प्रशस्तः यथा सामुद्रिके-

**पाणिपादतलेरक्तौ नेत्रान्तरनखानि च।**
**तालुकोऽधरजिह्वा च सप्त रक्तं प्रशस्यते।।**

स्त्रियास्तुयथा-

**पाटलः वर्तुलः स्निग्धो रेखाभूषितमध्यभूः।**
**सीमन्तनीनामधरे राज्ञां चैव प्रियो भवेत्।।**
**श्यामः स्थूलोऽधरोष्ठः स्यात् वैधव्यकलहप्रदः।**
**मसृणोमत्तकाशिन्याश्चोतरोष्ठः सुभोगदः।।**

वाचस्पत्ये (प्र०पृ०१२०) यथा-

**अयं सर्वनाम** कार्यभाक्।। तत्रायं विशेषणः-पूर्वपरावरदक्षिणोत्तरापराधरानिव्यवस्थायाम (पा०सू०१।१।३४) संज्ञायामित्युक्तेः व्यवस्थायामेवास्य सर्वनामता। व्यवस्था स्वाभिधेयापेक्षावधि नियमः।

**अवधित्य** ञ्च दैशिकं कालिकञ्च तत्र-

**पूर्वापरादि शब्दानां केषाञ्चितप्रविभागतः।**
**समान्येनाभिधानेऽपि प्रवृतिर्देश कालयोः।।**

**इत्यभियुक्तोक्तेः** केषाञ्चिदेवोभयावधित्व नियमः न सर्वेषाम्। तथाहि पूर्वापरावरोत्तर शब्दा **मुख्य** कृत्या दिक् कालयोर्वतन्तो। तदवच्छिन्नदेशग्रामा द्वौ च। तत्र पूर्वस्यां दिशिवसति **पूर्वस्याः दिश-** आगतः पूर्वदिक् सम्बन्धात् पूर्वावापि। एवं पूर्व पूर्वस्मिन् मासे वसति **पूर्वस्मात्** मासान्निवृतः। तत्कालसम्बन्धात् पूर्वो गुरुः पूर्वस्मिन् गुरोरागतः पूर्वस्मात् प्रासादादागतः इत्यादि। एवमपरावरपर शब्दत्रयस्य ते च विनापि देश कालसम्बन्धं

देशवृत्तिमन्तः इति भेदः। अपरदेश सम्बन्धादपरो ग्रामः अवरो वा। अपरस्मिन् अवरस्मिन् वा पर्वते वसति सन्निकर्षे विप्रकर्षे च सर्वासु दिक्षु तुल्योऽयं वोपदेशः। न तुते दिग्गत सम्बन्धेन तत्तदर्थ बोधकाः, एकस्यामेव दिशि स्थितयोः निकटानिकटयोः परावरादि व्यपदेश प्रवृत्तेः। एतच्छब्दापेक्षया मुख्यवृत्यावक्ष्यमाणकारिकायां देश ग्रहणं सार्थकम्। अन्यस्य तु रजतोदेशवृत्तित्वम्। सन्निकर्षासन्निकर्षयोर्देशवत् कालोऽप्याश्रयः। तेन परः अपरः अवरो वा कालः। अतःपरकालसम्बन्धात् परः पाणिनिः। अपर कालसम्बन्धादपरः कैयटादिः। दक्षिणाधर शब्दौ तु दिशि दिगवच्छिन्ने पर्वतादौ च वर्तते न तु कालेनापि कालाविच्छन्ने पर्वतादौ च वर्तते न तु काले नापि कालाविच्छन्ने इति भेदः। दक्षिणस्यां वसति दक्षिणपर्वते वा वसति व्यपदेशः। अवरस्यां वसति अपरादिक सम्बन्धात् अधर प्रासादे वा वसति इति। तेन स्वस्वज्ञातिधने नाम्नि कालदिग्वेश वृतयः। पूर्वापरावरपरा पराश्च दक्षिणोत्तरौ इति गणरत्ने सर्वेषां कालादिवृत्तित्वतावपि दक्षिणापरयोस्तु न काल वृत्तित्वमिति तेनैव स्वकृत व्याख्यानरूमे गणरत्नमहोदधौ स्थिरकृतन्। दक्षिणस्यां दिशि स्त्रीः। सर्वनाम्नां वृत्तिमात्रे पुंवद्भावाद् अधरस्यां भवः अधरतन इत्यादि अधरस्यां वर्तते अधर वृत्ति अधराः अपरस्याः अधरस्यामित्यर्थे अधरत इत्यादि। प्रायः एवमेव हलायुधे (१४४) अभिधानचिन्ता (५८१) मणौ शारदीयाख्यानाममालायां (४२३) शाश्वत (३०५) कोशादिषु च।

**अधस्पदम्**–अधः पदमि त्यवस्यायाम् अधः (पा.सू. ८।३।४७) शिरसीपदे इति सत्वम्। अधोवृत्तिपदम्। निम्नपदे इति वाचस्पत्यम्। (प्र० पृ०१२४) अधस्शब्दस्य पर्यायः यथामरः (१।८।१) अधोभुवनपातालबलिसद्म रसातलम् नागलोकमिति। पदशब्दस्य विशेषव्याख्या तत्रैवावलोक्या।

**अधित्यका**–अधिरुढा पर्वतोपरिभागम्। उपाधिम्यां (पा.सू. ५।३।५४) त्यकन्नासन्नारूढयोरि ति त्यकन् प्रत्ययः।

**अधिहरि**–अव्य। हरौ इति इति विग्रहे विभक्त्यर्थेऽव्ययीमावः (पा.सू. २।१।६) हरिमधिकृत्येत्यर्थः। इति वाचस्पत्यम्। (प्र.पृ. १३५)अधिशब्दस्यार्थः यथा मेदिन्याम् (मे. १८१।३९) अधिस्यादधिकारे चापीश्वरे च निगद्यते इति। कल्पद्रुमे (प्र.पृ.३७) यथा- प्रादिविंशत्युपसर्गमध्ये उपसर्ग विशेषः। अस्यार्थः उपरिभागः इति दुर्गादासः। अधिकं यथाअधिमासः, अधिकोमास इत्यर्थः।

**अध्वर्युः**–अध्वरं यज्ञं यौति सम्पादयतीति व्युत्पतौ कर्तरिक्विप् प्रत्ययः। होत्रकारी ऋत्विक्। यजुर्वेदवेत्तेत्यमरः। (२।७।१७) तत्र रामाश्रमीटीकायां व्युत्पतिर्यथा अध्वमिच्छतीति सुप आत्मनः(पा०सू० ३।१।८) क्यच् प्रत्ययः कव्यध्वरपृतनस्येति(पा०सू० ७।४।३)

लोपः क्याच्छन्दसीति (पा०सू ३।२।१७०) डः। यद्वा न ध्वरतीति धातोर्विच् (पा०सू० ३।२।७५) प्रत्ययः। केचितु अध्वर्यु शब्दमन्यथा व्युत्पादयन्ति यथा-अपष्ट्वादित्वात् सिद्धयति। तन्न समीचीनंतादृश गणाभावात्। वाचस्पत्ये (प्र० पृ.१४२) ऽपि व्युत्पत्तिः एवमेव तत्र अधिकं यथा-यजुर्वेदज्ञे होत्रकारिणि ऋत्विजिनिर्मिमीति क्रियासङ्घैरध्वयुर्यज्ञियं वपु रिति सा०मा०। सोमयागे षोडशसु ऋत्विक्ष चतुर्षु प्रधानेषु मध्ये ऋत्विग्भेदे। होताप्रथमं शंसति तमध्वर्युः प्रोत्साह्यति सि०कौ०। त्वमध्वर्युरुत होतासि पूर्व्याः प्रशास्तपोताजनुषा पुरोहित इति ऋग्वेदः। (ऋ० १।९।४।६) योपधत्वात् स्त्रियाम् ङीप। एवमेवाभिधानचिन्तामणौ (८१९) कल्पद्रुमादिषु। (प्र०पृ०४१)

**अनडुह्**—अनः शकटं वहतीति व्युत्पत्तौ अनसि वहेक्विनसोऽश्च। अस्य पर्यायः यथाभिधानचिन्तामणौ- ( चि०१२५६)

**ऋषभो वृषभो वृषः।**
**वा वेयः सौरभेयः भद्रशङ्कर शाङ्करौ।**

उक्षानड्वान ककुद्मान गौर्वलीवर्दराचशाङ्करः। कल्पद्रुमे (शब्द पृ० ४१) यथागौः भद्रः बलीवर्दः दम्भः दान्तः स्थिरः वली उक्षः ककुद्मान् ऋषभः वृषभः वृषः धुर्यः धुरीयः धौरेयः शाङ्करः शिववाहनः रोहिणीरमणः वोढा गौनाथः सौरभेयकः इति राजनिर्घण्टः। मनुना यथा-अजमेषामनड्वाहं खरं तत्वैकहायनमिति। एवमेवामरे (अम २।९।६०) वाचस्पत्यादिषु। (प्र० पृ० १४०)

**अनड्वाही**—अनडुहः स्त्री। अनो वहतीति यौगिको वा। गौरादिगणे निपातनादेव ङीषि आम् विकल्पः। अस्य पर्यायः यथाभिधानचिन्तामणौ (१२६५)

**गौ सोरमेयी माहेयी माहा सुरभिरर्जुनी।**
**उत्स्राऽध्न्या रोहिणी शृङ्गियन्यनुडुह्युषा।।**

तम्पा निलिम्पिका तवेत्यादि। प्राय एवमेव हलायुधे (११६५) कल्पद्रुमे (प्र०पृ.४१) वाचस्पत्यादिषु। (प्र०१४५)

**अनेहस्**—नाहन्ति नागच्छन्ति नाहन्यते इति वा नयाहनि (उ० ४।२२४) एह च इत्यसुन एतादेशश्च। नुडागमः। अस्य पर्यायः यथामरे कालसमयो दिष्टोऽप्यनेहापि (अम० १।४।१) यथा कालः समयोदिष्टानेहसो सर्वमूषकः। एवमेव वाचस्पत्ये। (अभिधान० चि०१२६) कल्पद्रुमादिषु। (प्र० पृ०१६४)

**अन्तर**—अन्नंराति ददाति इति व्युत्पत्तौ रादाने धातोः आतोऽनुपसर्गे (पा०सू०३।२।३) इति कः। अत्रामरः (३।३।१८७) अन्तरमवकवाशावधि परिधानान्तर्धिभेदतनादृयर्थे।

छिद्रात्मीयविनावहिखसरमध्येऽन्तरात्मनि च। अभिधानचिन्तामणौ (१३६४) यथा छिद्रस्य पर्याय:-

**रन्ध्रं विलं निर्व्यथनं कुहरं शुषिरं शुषिः।**
**छिद्रं रोपं विवरं न निम्नं रोकं वपान्तरम्।**

तत्रैव-(अभिधान चि० १४६०) अभ्यन्तरमन्तरालं विचित्रे मध्यमन्तरे। तत्रैव (अभिधानचि० १५०९) विघ्नेऽन्तराय प्रत्यूहेव्यवायाः इति। नानार्थसंग्रहे (२।१३) यथा- अन्तरङ्गे च (अन्तरमेवे) तादर्थ्ये स्थाने वा प्र (वाह्ये) क्षणेऽव्धिषु। (अवधौ)। विनार्थे स्वीये स्वेऽन्तर्धौवाक्य भेदे ऽन्तमध्ययोः। इति। कल्पद्रुमे (शब्द प्र० पृ.५३) यथा-

अवधौ यथा- निरन्तराभ्यन्तरवातवृष्टिषु। परिधाने यथा अन्तरे शाटकाः परिधानीया इत्यर्थः अन्तर्द्धौ यथा पर्वतान्तरितो रविः। भेदे यथा यदन्तरं सर्षपशैलराजयोः, यदन्तरं वायसवैनतेययोः। तादथर्ये यथा त्वामन्तरेण ऋणं गृहीतं त्वदयमित्यर्थः। छिप्रे यथा अयमत्यन्तरो मम। बिनार्थे यथा हरेत्त्वदालोकनमन्तरेण। बहिरर्थे यथा- अन्तरे चण्डाल गृहा वाह्या इत्यर्थः। अवसरे यथा- अत्रान्तरे च कुलटा कुलवर्त्मपातेत्यादि। मध्ये यथा-

**आवयोरन्तरे जाताः पर्वताः परितो द्रुमाः।।**

तदृशे यथा-

**हकारस्यघकारोऽन्तरतमः। इति एवमेव हलयुध कल्पद्रुमादिषु।**

**अन्तर्वत्नी**—अन्तरगर्भमध्यस्थमपत्यं विद्यतेऽस्याः, अन्तरशब्दात् मतुप् प्रत्ययः अन्तर्वतिपति-वतोर्नुक् (पा.सू. ४।१।३२) इति डीबानुगागौ। अत्रामरः (२।६।२२) आपन्नसत्वा स्याद् गुर्वव्यन्तर्वत्नी च गर्भिणी। अभिधानचिन्तामणौ (५३८-३९) यथा- अन्तवर्त्नी गुर्वणी गर्भवत्युदरिण्यपि। आपन्नसत्वा गुर्वी चेति। प्रायः। एवमेव हलायुधे (१२०) वाचस्पत्ये (प्र०पृ.२-४) कल्पद्रुमादिषु। (प्र.पृ.५४) यथा रघुवंशे- (१५।१३)

**तस्यामेवास्य यामिन्यान्तर्वत्नी प्रजावती।**
**सुतावसूत सम्पन्नौ कोषदण्डाविव क्षितिः।।**

**अन्य**—त्रिलिङगेष्वयंशब्दः। अन् शब्दात् वाहुलकात यः। अत्रामरः (३।२।८२) भिन्नार्थका अन्यतर एकस्त्वोऽन्ये तरावपि। अभिधानचिन्तामणौ (१४६८) यथा- अन्यदन्यतद्भिन्नं त्वमेकतिरच्च तत। मेदिन्यां (११३।५) यथा अन्योऽसदृशे इति। शब्दकल्पद्रुमे (प्र०पृ०६०) यथा-विचक्षणः इति जटाधरः। एकतरः सोमः इति शब्दरत्नावली। प्रायएवमेवान्यकोशेषु।

**अन्यत्–**अन् शब्दात् वाहुलकात् यत् प्रत्ययः। अत्र कल्पद्रुमः (प्र० पृ०६०) इतरं भिन्नम्। यथा देवदत्त आयतोऽन्यद् यज्ञदत्तः। अन्यदेवास्य गांभीर्यम् अन्यद् धैर्य महीयते इत्यादौ तु क्लीवलिङ्ग प्रथमैकवचनान्तरस्य शब्दस्वीकारेणाप्युपपत्तिरिति वोध्यम्। एवमेव वाचस्पत्यादिषु (प्र० पृ०२१३) च। एषु अन्यः। अन्य अन्यतमडतम प्रत्ययः। वहूनां मध्ये निर्धारिते एकस्मिन्। एवमेव वाचस्पत्ये। (प्र० पृ०२१३) अन्य शब्दडुतम्च् प्रत्ययः इति कल्पद्रुमः।(प्र० पृ०६०)

**एषामन्यतमेः स्थाने यः साक्ष्यनृतं वदेत्।**
**आसां महर्षिचर्याणां त्यक्तान्यतमया तनुम्।।** इति मनुः।

न्यायमते अनेकभेदावच्छिन्न प्रतियोगिताकभेदः। प्रायएवमेवान्यकोशेषु।

**अम्–**अव्ययम्-अम् धातोः क्विप् प्रत्ययः। स्वरादित्वादव्ययमस्य। शीघ्रतायम्, अल्पेच इति वाचत्पत्यम्।(प्र० पृ०३१७) एवमेव कल्पद्रुमादिषु।(प्र० पृ०६१)

**अमुकेऽत्र–**अदसोमादि (पा०सू० १।१।१२१) ति सूत्रे माद् ग्रहणप्रयोजने उक्तमिदम्। अदस् शब्दात् टेः प्रागकचिऽदकस्शब्दाज्जसि त्यदाद्यत्वं पररूपत्वं जसः स्थाने शी आदशे उत्वे गुणे अमुके इति रूपम्। अमुकेऽत्र इत्यत्र प्रगृह्य सञ्ज्ञा निवृत्यर्थं माद् ग्रहणम्। कृते च तस्मिन् मात् परत्वाभावान्न प्रगृह्यत्वमिति भावः। अमुक विषये कल्पद्रुमकारस्यमतम् (प्र०पृ० ८५) यथा- बुद्धिस्थत्वोपलक्षित धर्मावच्छिन्नम् स्ववृत्ति विशेष धर्मपुरस्कारेण तटतद्वस्तुवाचकम्। फलना इति भाषा। यथा- अमुकामुकगोत्राय तुभ्यमन्नं स्वधानमः इति श्राद्धेतेत्त्वम्। प्राय एवमेव वाचस्पत्यादिष्वपि। (प्र० पृ० ३२२)।

**अमूला–**नास्ति मूलं यस्याः सा। स्त्रियां टाप्। अत्र कल्पद्रुमः (प्र०पृ०८६) अग्निशिखावृक्षः। इति शब्द चन्द्रिका। मूल रहिते । इति मुग्धबोधम्। वाचस्पत्ये (प्र०पृ०३२८) यथा आदिकारणशून्ये मूलं मूलाभावादमूलम् सा० सू० त्रयोविंशति-तत्वानां मूलमुपावानं प्रधानममूलं मूल शून्यमनवस्थापत्या तत्र मूलान्तरा सम्भवात् प्र० म०। इयं वा इदं जीवनं मूलि चैवामूलञ्च तदुभयं वेदानां देवानां यन्मनुष्याः उपजीवन्ति पशवो मूलाः औषधयो मूलिन्यः शत प्रा०। मूलवृक्षदिशिफा तच्छून्ये त्रि० मूलान्नञ्च। अजादि टाप्। सा च अग्निशिखावृक्षः प्रायः एवमेवान्य कोशेषु।

**अम्बु–**अम्बते। अबि शब्दे धातोः बाहुलकादुः। केचितुअम्यति इति व्युत्पादयन्ति। तच्चिन्त्यम् अस्यात्मेनोपदित्वात्। अस्य पर्यायः यथामरे (१।१०।३-५) –

**आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्।**
**पयः कीलालममृतं जीवनं भुवनं वनम्।।**

**कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम्**
**अभ्योऽर्षस्तोयपानीय नीरक्षीराम्बु शंवरम्।।**

मेषपुष्पं घनरसः - इति। प्राय एवमेव कल्पद्रुमे (प्र० पृ०८७) वाचस्पत्ये (प्र० पृ० ३२९) यथा-लग्नावधिकेचतुर्थ स्थाने (वाला) इति ख्यातायामौषधौ। छातेतराम्बुच्छटा इति काव्यप्रकाशे। (प्र० १।४) तच्च जलं रसतन्मात्राद्रुत्पन्नो भूतविशेषः इति सांख्याः, पञ्चीकृतेभ्यः एव पञ्चेभ्यो भूतेम्यः स्थूलतया उत्पन्नमिति वेदान्तिनः, जलभूतांशबाहुल्यात् जलत्वव्यवहार विशेष्यातदवादः शा०सूत्रात्। तस्य च रूपरसस्पर्शब्दा विशेषगुणाः "योयो यावतिथश्चैषां स स तावद्गुणाः स्मृताः इति मनुना भूतमध्ये चतुर्थस्य जलस्य चतुर्गुणात्वाभिधानात् शब्दस्पर्शौ रूपरसौ सलिलस्य गुणा अमी। जले चुलचूल ध्वनिः। शीतर्स्पशः शुक्लरूपं रसो माधुर्यमीरितम् पञ्च द०। अग्नेरापः इति श्रुतेस्तस्याग्निप्रभवत्वम् यथोक्तं तत्रेन ऐक्षत् बहु स्यां प्रजायेयेति तदपाऽसृजत् तस्माद्यत्र क्व च शोचति स्वेदते पुरुषस्तेजस एव तदध्यायो जायन्ते छा०उ०। तेज इति प्रसिद्धं लोके दग्धृ पक्तृप्रकाशकं रोहितश्चेति तत् सृष्टं तेज ऐक्षत। तेज रुपत्वेन स्थितं सदैक्षतेत्यर्थः। बहुस्यां प्रजायेयेति पूर्ववतदपो सृजतः। आपो द्रवाः स्निग्धाः स्यादिन्यः शुक्लाश्चेति प्रसिद्धं लोके। यस्मात्तेजसं कार्यमृता आपस्तस्माद्यत्र क्वच देशे काले वा शोचति सन्तप्यते स्वेदते प्रास्वद्यते वा पुरुषस्तेजस एव तदपोऽधिजायन्ते। ता आप ऐछन्तेति पूर्ववदेव आकार संस्थितं सदैगतेत्यर्थः भा०। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमातिस्रो देवता अनेनैवजीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् छा०उ०। सेयं तिस्रो देवता अनुप्रविस्य स्वात्मावन्धे बीजमूते अत्याकृते नाम रूपे व्याकरवाणीति ताशञ्च तिसृणां देवतानामेकैकां त्रिवृतं करवाणि एकैकस्या त्रिवृत्करणे एकैकस्याः प्राधान्यं तयोर्द्वयोगुणाभावोऽन्यथा हिरज्वाइवैकमेव त्रिवृतकरणं स्यात् न तु तिसृणां त्रिवृत्करणमिति। एवं हि तेजोऽवन्नानां पृथक् नाम प्रत्ययलाभः स्यातेज इदम् इमा आपः। अन्नमिदमिति च पृथङ्नाम प्रत्ययलाभे देवतानां सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं स्यात्। एवमीक्षित्वा सेयं देवते तेनास्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेन सूर्यबिम्बवदन्तः प्रविशय वैराज पिण्डं प्रथमं देवतादीनाञ्च पिण्डमनुप्रविश्य यथासङ्०कल्पमेव नामरूपे व्याकरदीनामायमिदं रूप इति तासाञ्च देवतानां गुण प्रधानाभावेन त्रिवृतं त्रिवृतमेकैकमकरोत्कृतवतीदेवता भा०। अद्भिः सौम्य। शुङ्०गेन तेजो वा अद्मंयो भूयः तदा एतद्वायुभुगृहयाकाशमभितपति। तदाहुर्निशोचति निपतति वर्षिष्यति वा इति तेज एव तत्पूर्वदर्शीयित्याऽथापः सृजते तदेतदूर्ध्वाभिश्चतिरश्चीभूय विद्युद्भिः महाह्लाद चरन्ति तस्मादाहु विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वा अप्यापः सृजते उपास्विति। छा०उ०। तेजो वा अद्भ्योः भूयः, तेजसोऽपकारणस्वात्।

कथमपकारणत्वमित्याह। यस्मादव्योनिस्तेजस्तस्माद्वा एतत् तेजोवायुमागृह्यावष्टभ्य स्वात्मना निश्चलीकृत्य वायुमाकाशमभिव्याप्नुप्रुवत्तपति यदा, तदाहुर्लौकिका: अभिशोचति सन्तपयति सामान्ये न जगन्ति तपति देहानतो वर्षिष्यति वै इति। प्रसिद्धं हि लोके कारणमभ्युदतं दृष्टवत: कार्य भविष्यतीति विज्ञानम् । तेज एव तत्पूर्वमात्मनमुदभूत दर्शयित्वा अथान्तरमप: सृजते। अतएव अप् सृजत्वात् भूयोऽदभ्पस्तेज:। किञ्चाम्न तदेततेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति। कथम् ऊर्ध्वाभिश्चोर्ध्वगामि विद्युद्भि: तिरश्चीभिश्च तिर्यग्गताभिश्च महाह्लादा: स्तनयनशब्दाश्चरन्ति। तस्मादर्शनादाहुर्लौकिकाविद्योतते स्तनयति वर्षिष्यति वा। इत्याद्युक्तार्धमतस्तेज उपास्येति भा०। तत्रैव नैयायिकादीनामपि यथेष्टं मतमस्ति। प्राय अन्यकोशकारा अपि अस्य विषये सहमता: सन्ति।

**अयस्कंशः**—अय: कंश इत्यवस्थायाम् अत: कृकमिकुम्भपात्र (पा०सू० ८।३।४६) कुशाकर्णीष्विन व्ययस्ये ति सत्वम्। अत्र वाचस्पत्यमे (प्र० पृ० ३४२) अयोविकार: कुश पात्रं सत्वम्। लौहनिर्मिते पानपात्रे।

**अयस्कर्णी**—अय एव कर्णावस्य, गौरादित्वाद् डीष्। लौहतुल्यकठिन कर्णयुक्तायां स्त्रियामिति वाचस्पत्यम्। (प्र० पृ० ३४२)

**अयस्कामः**—अय: काम इत्यत्रापि अत: कृकमि -इति सत्वम्। अय: कामयते। कम् धातोरणि उपपद समास:। लौहाभिलाषिणि। इति वाचस्पत्यम्। (प्र० पृ० ३४२)

**अयस्कारः**—अयो विकारं करोति। कृधातोरण् प्रत्यय:। उपपद समास:। सत्वम्। लौहकारे इति वाचस्पत्यम्। कल्पद्रुमे (प्र० पृ०९२) यया-प्रजाङ्०प्राग्र: इति त्रिकाण्डशेष:। प्राय: एवोवान्य कोशेषु।

**अयस्कुशा**—अयस्सहिता कुशा। शकिपार्थिवादीनामिति समास: सत्वम्। लौहसहितकुशायामिति वाचस्पत्यम्। (प्र० पृ०३४२)

**अयस्पात्रम्**—अयोमयं पात्रम् सत्वम्। लौहमये पात्रे इति वाचस्पत्यम्। (प्र० पृ० ३४२)

**अये**—अव्ययोऽयं शब्द:। तन्निष्पत्तिर्यथा- इण् गतौ धातो: एच् प्रत्यय:। नये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी। (१८४।६४) कल्पद्रुमे (प्र० पृ.९२) यथा-सम्बोधनमिति शब्दरत्नावली। (कोमलामन्त्रणे-अयेकान्ते मुग्धे चटुलनयने चन्द्रवदने इत्युद्भट:। प्राय एवमेवान्य कोशकाराणां मतम्।

**अवदाता**—अवदायते स्म अव पूर्वक दैप् शोधने धातो: कर्मणि क्त प्रत्यय:। अत्रावदात शब्दस्तु न वर्णवाची किन्तु विशुद्धवाची तेन अवदाता इत्येव न तु वर्णादनुदात्ते

(पा०सू० ४।१।३९) इति डीब्नकारादेशश्च। अवदात शब्दे यथा हैम: (४।९६) अवदात तु विमले मनोशेसित पीतयोरिति। अमरे (१।५।१३) यथा-

**शुक्लशुभ्र शुचि श्वेत विशद श्येत पाण्डुराः।**
**अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः।।**

मेदिन्या (६७।१७८) यथा- अवदात: सिते गौरे विशुद्धेऽप्यन्यलिङ्०क:। कल्पद्रुमे (प्र० पृ० २४) यथा- मनोज्ञमिति हेमचन्द्र:। एवमेव वाचस्पत्यादिषु। (प्र०पृ० ४२६)।

**अवश्यलाव्यम्**—अवश्यायते इति अवश्यम्। अवश्यमुपपद लूञ् छेदने धातो: ओरावश्यके (पा०सू० ३।१।१२५) इति ण्यत् प्रत्यय:। आदिवृद्धौ समासे धातोस्तन्निमितस्यैवेति (पा०सू० ६।१।८०) वान्तादेशे अवश्यलाव्यमिति। अवश्यं शब्दस्य व्युत्पत्ति: यथा कल्पद्रुमेन (प्र०पृ०१२८) नवश्यमित्यवश्यम्। तत्पर्याय: यथामरे (३।४।१६) नूनमवश्यं निश्चयेद्वयम्। मेदिन्या (१८३।६१) यथा अवश्यं नित्यप्रत्नयो: इति।

**अवस्**—अव्यय:। अपर पूर्वपरावराणामित्यसि प्रत्यय:। तत्सन्नियोगिन अवरस्य अवादेशश्च व्यतिरेक:। वाचस्पत्ये (प्र०पृ० ४४५) यथा। अवर प्रथमाया: पञ्चम्या: सप्तम्या वार्थे असि अवादेश:। अवरशब्दार्थे पश्चादर्थे च। अवोरमणीयम्। आगत: वसति वा। अव- भावे अचिस्। रक्षणे न०। कर्मणि असिच्। यशसि अन्ने धने च न०। मित्रस्य चर्पणी धृतोऽवोदेवस्य अवोरक्षणं द्मुम्नं यशोऽन्नं वा प्राय एवमेव कल्पद्रुमादिषु। (प्र०पृ०२९)।

**अरण्यानी**—महदरण्यम्। अरण्यशब्दात् महदर्थे स्त्रीत्व विवक्षायां हिमारण्योर्महत्वे (वा० ४।१।४९) इति डीषानुकौ। महारण्यमरण्याणी इत्यमर:। (२।४।१) अस्ति मगधदेशे चम्पवावती नामारण्यानी इति हितोपदेशे एवमेव शब्दकल्पद्रुमादिषु। (प्र०पृ० ९४)।

**अर्वन्**—ऋच्छति। ऋगतौ धातो: अन्येभ्योऽपि (वा० ३।२।७५) इति वनिपि गुणे रपरत्वे अर्वन् शब्दोऽश्वे योग: रुढ:। तथाचामर: (२।८।४३-४४)।

**द्योतके पीति तुरग तुरङ्०गाश्चेतुरङ्गमाः।**
**वाजिवाहार्वगन्धर्व हयसैन्धवः सप्तयः।। इति।।**

अमरेऽन्यार्थेषु (३।१।५४) यथा-

**निकृष्ट प्रतिकृष्टार्व रेफयाप्यावमाधमाः।**
**कुपूय कुत्सितावद्य खेट गर्हयणिकाः समाः।।**

मेदिन्यां (८५।२६) यथा- अर्वातुरङ्०गमे पुंसि कुत्सिते वाच्यलिङ्०गकः इति। वाचस्पत्ये (प्र० पृ०३८०) यथाघोटके इन्द्रे गोकर्ण परिमाणे च। स्त्रियामर्वती सा च वडवायां कुट्टिन्यामपि। अस्य सुभिन्ने त्रादेशः अर्वन्तौ अर्वन्तः। श्लथीकृत प्रग्रहर्मर्वतां ब्रजाः। सौ तु अर्वा इत्येव। लोक एव त्रादेशः इति भाष्यम् वेदे तु अर्वाणौ इत्येव। गमनशीले त्रि०। स्त्रियाङीप् वनोरच अर्वरी। एवमेवकल्पद्रुमादिषु। (प्र० पृ० १००)।

**अर्कः**—अर्च्यते। अर्च पूजायां धातोः कर्मणि घञ् (पा०सू० ३।३।१९) प्रत्ययः चजोः कु (पा० सू० ७।३।५२) इति कुत्वम्। यद्वा कृदाधारार्चिकलिभ् (उ० ३।४०) कः। चोःकुः (पा०सू० ८।२।२०) झरोझरि सवर्णे (पा०सू० ८।४।६५) इति कलोपः। यद्वा अर्क स्तवने चुरादिः। अर्क्यते। एरच (पा०सू० ३।३।५६) रुरजण्यन्तानाम् इति मते घञ्। अर्को द्रुभेदेस्फटिके ताम्रे सूर्ये विडौजसि इति हैमः। सूर्यस्य पर्यायः भानु प्रयोगे द्रष्टव्यः। अर्कः स्फटिक सूर्ययोरित्यपि अमरे। (३।३।४) कल्पद्रुमे (प्र० पृ०९८) यथा पण्डितः इति शब्दरत्नावली। जेष्ठभ्राता इति दण्डादि नाथः। लक्षणयारविवारः। इति ज्योतिषम्। वृक्ष विशेषस्य पर्यायः यथाक्षीरदलः पुञ्छी प्रतापः क्षीरकाण्डकः विक्षीरः क्षीरीखर्ज्जुघ्नः शीत पुष्पकः जम्मनः क्षीरपर्णी विकीरणः सदापुष्पः सूर्यान्हः आस्फोटकः तूलफलः शुकफलः इति राजनिर्घण्टः। वसुकः आस्फोटक गणरूपः मन्दारः अर्कपर्णः इत्यमरः। अथ श्वेतार्कपर्यायः अलर्कः राजार्कः प्रतापसः गणरूपी। अथ रक्तार्कपर्यायः विश्वोरः सदापुष्पी रूपिका आदित्यपुष्पिका दिव्यपुष्पिका अर्कः इति रत्नमाला। अस्यगुणाः कटुत्वम्, उष्णत्वम् अग्निकारित्वम्। वातशोथ ब्रणार्शः कुष्ठकृमिनाशित्वञ्च। इति राजनिर्घण्टः। कफदोषनाशित्वम् तीक्ष्णत्वञ्च। अस्य क्षीरगुणाः कृमिदोषव्रणनाशित्वम् कुष्ठार्श उदररोगेचहितकारित्वम् इति राजवल्लभः। एवमेवान्यकोशकाराणां मतमस्मिन् शब्दे। सूर्यस्य पर्यायः भानुशब्देऽवलाक्यः।

**अलाव्वा**—अलाबू शब्दादूङि० सवर्णदीर्घो ततः ऊङ०न्तात् सुबुत्पत्तिः टायां यणादेशे अलाब्बा इति रूपम्। अलाबूशब्दस्य व्युत्पत्तिर्यथा-न लम्बते। लबि अवस्रंसने धातोः नञ्लिम्बेनंलोपश्च इत्यूर्णित्। अत्रामरः तुम्व्यलाबूरुभे समे तत्रैव रामाश्रमीटीकायां यथा- अलाम्बुस्तु पिण्डफला तुम्बिस्तुम्बी महाफला। तुम्बा तु वर्तुलाऽम्बुनि (र्नि) म्बचूर्णा तु लाबुका इति वाचस्पतिः। एवमेव वाचस्पत्ये (प्र०पृ०४१०) कल्पद्रुमादिषु। (प्र०पृ० १२०)।

**अशिश्वी**—न विद्यते शिशुरस्या एति विग्रहे सव्यशिश्वी (पा०सू० ४।१।६२) भाषायामिति ङीषिउकारस्ययण्। तथाचामरः (२।६।११) अतिश्वी शिशुना विना। एवमेव वाचस्पत्ये (प्र०पृ० ४७६) कल्पद्रुमादिषु (प्र०पृ० १३६)।

**अश्वपालिका**—अश्वान् पालयतीति। कर्तरि ण्वुल् अकादेशे णिलोपे विभक्त्यादिकार्ये अश्वपालकः। तस्य स्त्री। टापि कृते कात्यपूर्वाकारस्येत्वम्। घोटकरक्षिकेत्यर्थः।

**अश्विका**—अश्वाशब्दात् स्वार्थे कः ह्रस्वे कृते पुनष्टापि अश्वका शब्दः। अत्र आकारस्य स्थानिकत्वेऽपि यक् पूर्वत्वाभावादित्व विकल्पो न किन्तु नित्यमेव। अत्रामरः (२।८।४६) वाम्यश्वाव: वेति एवमेव कल्पद्रुमादिषु। (प्र०पृ० १४७)

**अष्टका**—अश्नन्ति पितरोऽस्याम्। अश् धातोः तकन् प्रत्ययः अत्र अष्टकापितृदैवत्ये इति वार्तिक बलादनेत्वम् अत्र कल्पद्रुमः (प्र०पृ० १४८) श्राद्धविशेषः। तिथिभेदः तद्यथ- गौणचान्द्रपौषमाघ फाल्गुन मासीय कृष्णाष्टमी। आश्विन कृष्णाष्टमी च। एतासु श्राद्धमावश्यकम्। यथा- आग्रहायण्या ऊर्ध्वे तिसृषु कृष्णाष्टमीसु श्राद्धानि नित्यानि। यथा गोभिलः- अष्टका योर्द्धमाग्रहायण्यास्तमिस्त्राष्टमी। इति। तत्रैव कल्पद्रुमे ब्रह्मवायु विष्णु धर्मोत्तर पुराणोपवर्णित विधानमप्यस्ति। एवमेववाचस्पत्यादिषु। (प्र०पृ० ५१६)।

**अष्टिका**—अष्टौ अध्यायाः परिमाणमस्याः। कन् प्रत्यये टापि इत्वम् पाणिनीयाष्टाध्यायी। एवमेव वाचस्पत्ये। (तत्रैव)।

**असिन्की**—स्त्री०। न सिता शुक्लकेशा तन्निष्पतिर्यथा- सिनोति। षिञ् बन्धने धातोः अञ्जिघृ सिभ्यः क्तः (उ० ३८९) यद्वा सीयते स्म क्तः। (पा०सू० ३।२।१०२) द्यतिस्यति (पा०सू० ७।४।४०) मास्थामिति किति इतीत्वम्। छन्दसि (वा०-४।६।३४) क्नेमे इति तस्यक्नः। नान्तत्वातङीप्। (पा०सू०४।१।५) अत्रामरः (२।६।१८) असिन्की स्यादवृद्धा वा प्रेष्यान्तः पुरचारिनी मेदिन्यां (८५।३३) यथा- असिक्नीस्यादवृद्धान्तः पुरप्रेष्यानदीभिदेः कल्पद्रुमे यथादक्षपत्नी (प्र०पृ०-१५३) वीरण सुता यथा हरिवंशे तत्रैव असिक्नीमावहत्पत्नीं वीरणस्य प्रजापतेः। सुतां सुतपसां- युक्तामिति। वाचस्पत्ये (प्र०पृ०-५५३) यथा- रात्रौ - इति प्रायः एवमेव अन्यकोशेष्वपि।

**असिता**—स्त्री०। नसिता। असितपलितयोः प्रतिषेधात् वर्नादनु (पा०सू० ४।१।३९) इति ङीष् तकारस्य नकारादेशश्च न। अत्र कल्पद्रुमः (प्र०पृ०-१५३) नीलीवृक्षः इति राजनिर्घण्टः। या अवृद्धा महादेवीभिः प्रेष्यते अन्तःपुरे च पुनः पुनश्चरति सा। या अवृद्धायुवतिः कृष्णकेशा प्रेष्यादासी अन्तः पुरे चरति सा इति सारसुन्दरी। स्वनामाख्याता स्वर्वेश्या यथा हरिवंशे (इत्यपि कल्पद्रुमे एव)- असिता च सुबाहुश्च सुवृत्ता सुमुखी तथा।

**असृकम्**—अस्यते। असुक्षोपणे धातोः बाहुकलकादृजः। न सृजति वा। सृज् विसर्गे धातो क्विप् प्रत्ययः। क्विन् - प्रत्ययस्य (पा०सू० ८।२।६२) इति कुः। क्विन् , प्रत्ययो यस्मात् इति बहुब्रीहिः। ऋत्विक्दधृक्स्रक् - इति सृजेः क्विन् विहितः, इति अमरस्य (२।६।६४) रामाश्रमीटीकायाम्। अस्य पर्यायः यथा अमरे एव-

रूधिरे सृग्लोहितास्त्र रक्तक्षतजशोणितमिति। मेदिन्यां (३१।२०) यथा असृग् स्याद् योगभेदेना रक्तेऽपि स्यान्नपुंसकम्। कल्पद्रुमे (प्र०पृ० १५४) यथा- कुङ्कुममिति राजनिर्घण्टः। विष्कुम्भादि सप्तविंशतियोगान्तर्गत षोडशयोगः। तत्र जात फलादिकमपि तत्र वर्णितमस्ति। एवमेव हलायुधादिषु (११४)।

**अस्ति**—अव्य०। असनम्। अस् धातोः क्विच् तिर्वा। यद्वा अस् धातोः स्तिक् प्रत्ययः। अस्ति सत्वे इत्यमरः (३।४।१८) अस् धातोस्तिपि प्रत्ययेऽपि अस्य निष्पत्तिर्भवति। यथा कुमारसम्भवे (१।१) अस्त्युत्तरस्यांदिशि देवतात्माहिमालयो नाम नगाधिराजः। प्रायः एवमेव कल्पद्रुमादिषु। (प्र०पृ०१५५)

**अस्तिक्षीरा**—तिङ०न्तप्रतिरूपकमव्ययम्। अस्तिक्षीरं यस्याः। बहुदुग्धवत्यां स्त्रीगव्यादौ इति वाचस्पत्यम्। (प्र०पृ०५६६)।

**अस्थि**—अस्यते क्षिप्यते यत्। अस् धातोः अशिसञ्जिभ्यां (उ०-३।१।१५४) क्थिन् प्रत्ययः। अत्रामरः (२।६।६८) कीकसं कुल्यमस्थि च। कल्पद्रुमे यथा- शरीरस्य. सप्तधात्वन्तर्गत धातुविशेषः। अस्थि स्वरूपाद्युक्तं भावप्रकाशे।

**मेदो यत्स्वाग्निना पक्वं वायुना चातिशोषितम्।**
**तदस्थि संज्ञां लभते स सारः सर्वविग्रहे।।**
**अभ्यन्तरगतैः सारैर्यथा तिष्ठन्ति भूरुहाः।**
**अस्थिसारैस्तथा देहा ध्रियन्ते देहिनां ध्रुवम्।।**
**तस्माच्चिरविनष्टेषु त्वङ्०मासेषु शरीरिणाम्।**
**अस्थीनि न विनश्यन्ति सारा एतानि सर्वथा।।**
**मेदसोऽस्थि ततो मज्जा मज्जातः शुक्रसम्भवः।।**
**इति सुश्रुतः (कल्पद्रुमे)**

कल्पद्रुमे अस्थिगणनाऽपि वर्णितास्ति। एवमेव वाचस्पत्यादिषु। (प्र०पृ० ५६८)

**अहन्**—न जहाति न त्यजतिसर्वथा परिवर्तनम्। नञि जहातेः (उ० १।१५८) कनिन् प्रत्ययः। अस्य पर्यायः यथामरे (१।४।२) घस्त्रसोदिनाहनी वा तु क्लीवेदिवस वासरौ इति। वाचस्पत्ये (प्र०पृ० ५७६) यथा- विष्णो तस्य सर्वदा प्रकाशमानत्वात् तथात्वम्। अहः संवत्सरो मासः विष्णु सहस्त्रनाम। अर्च्चिरादिमार्गे आतिवाहिके अहरभिमानि देवे। ते अर्च्चिषम् सम्पद्यन्ते अर्च्चषो हः अन्ह आपूर्यमाणपक्षम् छा०उ०। एतदधिकृत्य अतिवाहिकास्तल्लिङ०गात् २।१० सूत्रे आतिवाहिकत्वमेषां निर्णीतम्, रात्रौ च। यामश्चत्वारश्चारोमर्त्यानामहनी उभे। अयने अहनीप्राहुः इति च। प्रायएवमेन्यकोशेषु।

**अहंयुः**—अहः अस्यास्तीति। अहं शब्दात् अहं शुभयोर्युस् (पा०सू० ५।२।१४०) इति युस् प्रत्ययः। अहङ्०कारयुक्तः गर्वान्वितः। तत्पयार्यः अहङ्०कारवान् इत्यमरः (३।१।५०) प्रायः एवमेव कल्पद्रुमादिषु (प्र०पृ० १५८) च।

**अहर्गणः**—अन्हां गणः। अहन् गणः इत्यवस्थायां रोऽसुपि (पा०सू० ८।२।६९) इति रेफादेशः। अत्र कल्पद्रुमः (प्र०पृ० १५८) मासः इति हारावली ग्रहणां मध्यादि ज्ञानार्थ श्वेतवाराहकल्पावधि सृष्ट्यवधि ब्रह्मसिद्धान्तोक्तकल्पावधिककल्पाद्य व्यावधि सृष्टयकाल पर्यन्तं परिगणित दिनसमूहः। तत्पर्यायः - द्युवृन्दम्। दिनौघः। द्युगणः। दिनपिण्डः इति ज्योतिषशास्त्रम्। एवमेव युगानां दिनगणना सहितं विस्तरेण वाचस्पत्येऽपि। (प्र० पृ० ५७७) अन्यकोशेषु च प्राय एवमेव।

**अर्हपतिः**—अन्हां पतिः। अहरादीनां पत्यादिषुवा रेफ (वा० ८।२।७०) इति वा रेफः अस्य पर्यायः भानुः प्रयोगे द्रष्टव्यः। एवमेवान्यकोशकाराणामभिप्रायः। यथा रघुः (१०।५४) द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम्।

**अहो ईशः**—अहो ईशः इत्यवस्थायां ओत् (पा०सू० -१।१।१५) इति प्रगृह्यसंज्ञायां प्रकृतिभावः। (पा०सू० ६।१।१२५) अहो शब्दस्य व्युत्पत्तिश्चेत्थम् - अहानम्। ओहाङ्० गतौ धातोः डो प्रत्ययः। अत्रामरः। (३।४।९) अहोहि च विस्मये। कल्पद्रुमे (प्र०पृ १६०) यथा- धिगर्थः शोकः करुणार्थः। विषादः सम्बोधनम् - प्रशंसा पदपूरणम् असूया वितर्कः इति। यथाभिज्ञानशाकुन्तले प्रथमाङ्०के। अहो मधुरमासां दर्शनम्। एवमेववाचस्पत्यादिषु। (प्र०पृ० ५८६) ईश शब्दस्य व्युत्पतिर्यथा कल्पद्रुमे (प्र० पृ० २१६) इष्टे इति। ईश धातोः कः। महादेवः।

**अहोरात्रः**—अहश्च रात्रिश्च द्वयोः समाहारः। अहः सर्वैकदेशेत्यच् (पा०सू० ५।४।८७) प्रत्ययः रात्रान्हाइति (पा०सू० २।४।२९) पुसि। अत्र कल्पद्रुमेः (प्र०पृ०१६०) दिवानिशम्। स तु सूर्योदय द्वय परिच्छिन्न त्रिशंन्मुर्हूत्तात्मक कालः। मनुष्याणां मासेन पक्षोऽहोरात्रो भवति। मनुष्याणामेकवर्षेण देवाना महोरात्रो भवति। द्विसहस्त्रगुणित मानुष्य चतुर्युगमानेन ८६४०००००० वर्षा भवन्ति। एवमेवामरे वाचस्पत्यादिषु (वाच० प्र०पृ० ५८६) च।

**अहोरथन्तरम्**—अहश्च रथन्तरश्चेति। अत्र उत्वं गुणश्च भवति। अत्र वाचस्पत्यम् (प्र०पृ० ५८६) अन्हि गेयं रथन्तरं सामभेदः न रो रः। दिवसेगेये रथन्तरनामक सामभेदे।

**अहोरूपम्**—अन्हो रूपम्। नस्य रुत्व उत्वे गुणे रुपसिद्धिः। दिवसरुपे इति वाचस्पत्यम्।

**आ**—अव्य०। आप्नोति। आप्लृ व्याप्तौ धातोः क्विप् (पा०सू० ३।२।१७८) प्रत्ययः। पृषोदरादित्वात् (पा०सू० ३।३।१०९) पलोपः। अत्र मेदिन्यां (१७८।३।) यथा- स्मरणे वाक्यारम्भे च। आ प्रगृह्यः स्मृतौ वाक्येऽनुकम्पायां समुच्चये इति। एवमेवामरे। (३।३।२४०) वाचस्पत्ये (प्र-पृ०-५८७।) यथा-वाक्ये (वाक्यस्यान्यथात्वद्योतने पूर्वमेवममंस्था इदानीमेवमिति प्रतिपादने) स्मृतौ (आ-एवं मन्यसे इति स्मृतस्यान्यथा प्रतिपादने) अनुकम्पायाम्, समुच्यचे, अङ्०गीकारे, ईषदर्थे क्रियायोगे, सीमायाम्, व्याप्तौ च। वाक्यस्मृति भिन्नेऽस्य ङि०त्वमिच्छन्ति अङि०तोऽस्य एकाज् निपातत्वात् प्रगृह्यसंज्ञाडितस्तु न। अत एवोक्तम् मर्यादायामभिविधौ क्रियायोगेतदर्थयोः। य आकारः स ङि०त् प्रोक्तः वाक्यस्मरणयोरङि०त् ॥ लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्। व्याप्तौ ब्रह्मास्त्यासकलात्। सकलं व्याप्येत्यर्थः। एतदर्थे विकल्पेन अव्ययीभावः। आत्मबोधम्। आसकलम्। धातुयोगः उपसर्गः यथा आगच्छत् ग्रामात्। ईषदर्थे आकम्पः आकेकरः। वाक्यञ्च वाक्यार्थ द्योतकता। स्मरणं प्रमाणान्तरावगतस्य न तु शब्द मात्रेणावगतस्येति तयोः भेदः।

**आक्षिकी**—अक्षैर्दीव्यति। तेन दीव्यति खनतिजयति जितमिति (पा०सू० - ४।४।२।) ठक् आदिवृद्धिः (पा०सू० - ७।२।११७) ठस्येकः (पा०सू० - ७।३।५०) यस्येति चेत्यकारलोपः (पा०सू० ६।१।१४८) आक्षिका शब्दाद् ङीष् (पा०सू० ४।१।१५) अकारलोपः। (पा०सू० ६।४।१४८) अत्र वाचस्पत्ये (प्र० पृ० ६०२) यथा- त्रिलिङ्०गेष्वयं शब्दः। अक्षेण देवके, अक्षेण जायिनि, अक्षजिति च प्रातिभाव्यं वृक्षादानमाक्षिकं सौरिकं च यत् मनुः भारभूतानक्षान् हरति वहत्यावहति (पा०सू० ५।१।५०) भाराद्वंशादिम्यः इति अक्षपूर्वात् भाराट्ठक्। आक्ष भारिकः अक्षभारावाहकादौ त्रि अक्षोत्रवंशादि साहचर्यात् कलिद्रुमः।

**आखुः**—आ खनति। खनु अवदारणे धातोः अङि० खनिवंह्योर्नलोपश्चेति (१।३३) उः। केचित्तु आखु शब्दमन्यथा व्युत्पादयन्ति यथा आङि०खनिवंह्योर्नलोपश्चेति कुम लोपश्च। बाहुलकादलोपः इति सूत्रमुपस्थापयन्तितच्चिन्त्यम्। उज्ज्वलदत्तादि विरोधात्। अस्य पर्यायः यथामरे (२।१२) उन्दुरुर्मूषिकोऽप्याखुः। अधोगन्ता तु खनको वृकः पुंध्वज, उन्दुरः। वाचस्पत्ये (प्र० पृ० ६०३) यथा-मूषिके, चौरे, शूकरे च कर्मणि डुः। देवताड़वृक्षे। विभवे नात्ति न ददाति जुहोति न। तमाहुराखुमित्युक्तलक्षणे कृपणे च। एव मेव कल्पद्रुमादिषु। (प्र० पृ० १६४)

**आचार्यानी**—आचार्यस्य स्त्री। इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्य यवयवनमातुलाचार्याणामानुगि ति (पा०सू० ४।१।४९) डीषानुकौ आचार्यादणत्वं चे ति णत्वाभावः। एवमेवामरादिषु। (अम० २।६।१५)

**आचार्या**—अ चर्यते। चर् गतौ धातौः ऋहलोण्यदि (पा०सू० - ३।१।१२४) ति ण्यत् प्रत्यये तत्तत्कार्ये आचार्येति। अत्रामरः (२।६।१४) स्यादाचार्यापि च स्वतः।

**आढ्यङ्करणी**—अनाढ्यः आढ्यः क्रियतेऽनयेति विग्रहे ख्युन् (पा०सू० ३।२।५६) प्रत्यये ततत्कार्ये ङीप् (वा०४।१।१५) प्रत्ययः।

**आदह**—अव्य० उपक्रम हिंसा कुत्सनेषु।

**आपः**—आप्नुवन्ति आप्यन्ते वा। आप्लृव्याप्तौ धातोः अप्नोतेह्रस्वश्चेति (उ० २।५८) क्विन् ह्रस्वत्वञ्च। असुनि (उ० ४।२०८) प्रत्यये सति सान्तः क्लीवश्च। अस्य विशेष पर्यायाः अम्बु प्रयोगे द्रष्टव्याः।

**आम्**—आमयति। अम् गत्यादिषु ण्यन्तः क्विप्। (पा०सू० ३।२।१७८) आम् ज्ञाननिश्चयस्मृत्योरिति मेदिनी। (१८२।५०) वाचस्पत्ये यथा- अङ्गीकारे, निश्चयेशाने, स्मृतौ प्रतिवचने च। एवमेवान्यकोशेषु।

**आम्बष्ठ्या**—अम्बष्ठस्यापत्यं स्त्रीत्यर्थः। वृद्धेत्कोशलजादाञ् (पा०सू० ४।१।१७१) ञ्यङि० ति ञ्यङ्० प्रत्ययः ततः यङ०श्चाबिति (पा०सू० ४।१।७१) चाप् प्रत्यये तत्तकार्ये आम्बष्ठ्येति। अम्बष्ठ शब्दस्य व्युत्पतिर्यथा-अम्बे तिष्ठतीति। सुपि स्थः (पा०सू० ३।२।४) इति कः। अम्बाम्बगोभूमि सव्यापद्वित्रिकुशेकुशङ्०क्वङ्०गुमञ्जिपुञ्जिपरमेवर्हिर्दिव्याग्निभ्यः स्थः इति (पा०सू०८।३।९७) षत्वम् ह्रस्वः अत्र मेदिनी (३९।११) अम्बष्ठोदेश भेदेऽपि विप्रादवैश्या सुतेऽपि च। अम्बष्ठा चाम्ललोण्यां स्यात् पाठ यूथिकयोरपि। हस्तिपकेऽर्थेऽस्य प्रयोगो यथाश्रीमद्भागवते (१०।४३।३)।

**अम्बष्ठाम्बष्ठ मार्गं नो देह्यपाक्रम मा चिरम्।**
**नो चेत्सकुञ्जरं त्वाद्य नयामि यमसादनम्।।**

वाचस्पत्ये (प्र०पृ० ३२८) यथा-अम्बाय। चिकित्सकनन्दाय-तत्रत्याख्यापनार्थं तिष्ठतेऽभिप्रैति स्थाकषत्वम्। चिकित्सके विप्राद् वैश्यकन्यायां जाते सङ्०कीर्णवतो ब्राह्मणाद् वैश्यकन्यायामबष्ठो नाम जायते इति मनूक्तेः। द्विजातीनां समानजातीयासु जाताः तथानुलोम्येनोत्पन्नाः ब्राह्मणेन क्षत्रियावैश्ययोः, क्षात्रियेन वैश्यायामेव षट् पुत्राः द्विजधर्मिणः उपनेयाः तान्तरजना इति यदुक्तंतत् तज्जातिव्यपदेशार्थं न संस्कारार्थमिति कस्यचिद् भ्रमः स्यात् अत एषां द्विजाति संस्कारार्थ वचनमिति कुल्लू० उक्तेश्च

अम्बष्टादीनामुपनयनसंस्कार सत्वेऽपि इदानीनन्तनानां संस्कारलोपेन शूद्रत्वम्। अत इदानीं क्षत्रियादीनां शूद्रत्वमेवाम्बष्ठादीनामपि इति रघु०। ये तु ब्राह्मदोषप्रायश्चित्तमाचरन्ति तेषामुपनयनयोग्यता भवत्येव। येषां पित्रादयोप्यनुपनीतास्तेषामापस्तम्बोक्तम् यस्यपितापितामहावनुपनीतौ स्यातान्तस्य त्रैविद्यकम्ब्रहचर्यं यस्य प्रपितामहादीनां नानुस्मर्यते उपनयनस्तस्य द्वादश वार्षिकं त्रैविधकम्ब्रह्मचर्यमिति मिता: उक्ते: सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम् मनूक्तातेषां वृत्ति देशभेदे, हस्तिपके च, यूथिकायां स्त्री। स्वार्थे कनि ह्रस्वे अत इत्वे। अम्बष्ठिकाप्यत्रैव (वामनहाटीति प्रसिद्धायां ब्राह्मी लतायाञ्च। एवमेव संक्षेपेण कल्पद्रुमादिषु। (प्र०पृ० ८७)

**आरात्**–अत्र। आ समन्तात् राति। आङुपसर्गपूर्वक रा दाने धातो: बाहुलकादाति प्रत्यय:। आराद्दूर समीपयो: इति मेदिनी। (१८१।२८) यथा कालिदास: (रघु० २।१०) तमर्च्यमारादभि वर्तमानमिति। एवमेव ममरादिषु। (३।३।२४२)

**आर्यिका:**–अर्तु: प्रकृतमाचरितुं योग्या, अर्यते वा। ऋ धातो: ण्यत् प्रत्यये आर्यशब्दो निष्पद्यते। तत: स्त्रीत्वविक्षायां टापि आर्येति। तत: स्वार्थे कन् प्रत्यये ह्रस्वे टापि आर्यका। उदीचामात: (पा०सू०७।३।४६) स्थाने यक पूर्वाया: इति यकारादकारस्य आकारस्थानिकस्येत्व विकल्प:। इत्वाभावे आर्यका इति। आर्य शब्दस्य पर्याय: यथामरे (२।७।३) महाकुल कुलीनापि सभ्यसज्जन साधव:। तत्रैव (अम०-१।७।१४) आर्यस्तु वाचस्पत्ये (प्र० पृ०८१९) यथा-स्वामिनिसुहृदि गुरौ च। श्रेष्ठकुलोत्पन्ने पूज्ये श्रेष्ठे सङ्०गते नाट्योक्तौ मान्ये उदारचरित शान्तचिते च।

**कर्तव्यमाचरन् कार्यमकर्तव्यमनाचरन्।**
**तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः।।**

इत्युक्तलक्षणे जने च त्रि०। आर्यत्वेन सम्भाषणे नाटके नियम विशेणा: सा०द० उक्ता यथा -

**राजन्नित्यृषिभिर्वाच्यः सोऽपत्य प्रत्ययेन च।**
**स्वेच्छयानामभिविप्रैः विप्र आर्येति चेतरैः।।**

विप्रेतरैविप्र: आर्येति वाच्य:।

वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम् नट्या सूत्रधार: आर्येति वाच्य: सूत्रधारेण च नटी आर्या इति वाच्या। वयस्येत्युतमैवाच्यो मध्यैरार्येति चाग्रज:। आर्यवालचरितप्रस्तावनाडिण्डिम् इति वीर च० रामचरित वर्णने लक्ष्मणोक्ति:।

**वत्स ! पुत्रक तातेति संज्ञागोत्रेण वा युतः।**
**शिष्यो गुणश्च वक्तव्योऽमात्य आर्येति चेतरैः।।**

इतरैरमात्य आर्येति वक्तव्यः। वृतेन हि भवत्यार्यो न धनेन न विद्यया उक्तेः सदाचारेणैव नराणामार्यत्वम्। प्राकृतभाषायां स्त्री मुखबाहूरूपज्जानां या लोके जातयो बहिः। म्लेच्छवाचश्चोर्यवाचः सर्वे ते दस्यवः स्मृताः मनुः। श्वसुरे पुलिङ्०गः। आर्यपुत्रः पतिः आर्यो ब्राह्मणकुमारयोः या० उक्तेः कर्मधारये ब्राह्मणकुमारयोः परतः प्रकृतस्वरः। प्रायः एवमेव कल्पद्रुमादिषु। (प्र०पृ० १९०) आर्या शब्दो पार्वत्यर्थेऽयस्ति तत्पर्यायः कात्यायनी शब्दे द्रष्टव्यः।

**आर्यहलम्**—अव्य०। आर्यं हन्ति। हन् धातोउप्रत्ययः। तस्मिन् लीयतेली धातोः वा मुः। बलात्कारे बलात्कारस्य आर्यहन्तरि समाश्रय नियमात् तथात्वम्। स्वरा० अव्ययत्वम्। इति वाचस्पत्यादिषु। (प्र० पृ०८१३)

**आशीः**—आशास्ते। आङ्० शासु इच्छायां धातोः क्विप् (पा०सू० ३।२।७६) प्रत्ययः। यद्वा आशासनम्। अनया वा. संपदादि (वा० ३।३।१०८) आशासः ( वा० ६।४।३४) क्वौ-इतीत्वम्। आशी-स्तालुगतादंष्ट्रा तया विद्धो न जीवति हितस्याशंसा अर्हेर्दष्ट्राआशीर्हितेषिणि उरगस्य च दंष्ट्रायामिति हेमः (३।५८८-८९) अमरेण (३।३।२२८) यथा- स्त्री त्वाशीर्हिताशंसाहिदंष्टयोः मेदिन्यां (१७१।१६) यथा-आरण्यिका परिच्छिदे चार्शी दन्ते मरुद्भुजामिति। एवमेव हलायुधादिषु। ( पृ०१५४)

**आसुरायणी**—असुरस्यापत्यं स्त्री। इञ् (पा०सू० ४।१।९५) - प्रत्ययत्वादादिवृद्धौ (पा०सू०. ७।२।११७) ष्फ (वा० ४।१।१९) प्रत्यये तत्कार्ये ङीष्। (पा०सू०- ४।१।४१)

**इ**—अव्ययोऽयं शब्दः, अनव्ययश्चानेकार्थकोऽपि! तद् यथा मेदन्यिां (१७८।३) इ खेदे च रुषोक्तौ चापाकरणानुकम्पयोः। वाचस्पत्ये (पृ०९०९) यथा-अस्य विष्णोरपत्यम् इः। कामदेवः। स च रुक्मिण्यां विष्णोरंशात् कृष्णाज्जातः। तत् कथा यथा- रुक्मिण्यां वासुदेवाच्च लक्ष्म्यां कामोधृतवृतः। शम्बरान्तकरो जज्ञे प्रद्युम्नः काम दर्शनः। इति हरिवंशपुराणे। (१६३ अध्याय।) एवं व्युत्पत्तित्वेन कामदेवस्यैव इ शब्दार्थता नाभिलाषस्येतिवहवः। कामदेव दैवत्वाच्च अभिलाषे औपचारिक इत्यन्ये। भेदे रोषोक्तौ निराकरणे अनुकम्याम् गदे विस्मये निन्दायाम् सम्बोधने च। चादिगणपठितत्वादव्ययत्वम्। एवमेव कल्पद्रुमादिषु। (प्र०पृ० २०१)

**इ इन्द्रः**—प्रकृतिभावत्वात् - न सन्धिः इन्द्रस्यव्युत्पतिर्यथा। इन्दति इदि परमैश्वर्ये धातोः = सृजेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरमद्रोग्रमरेमेरशुक्रशुक्लगौरवन्नेरामालाः इति रन् प्रत्ययः। केचित रग् प्रयत्येन निष्पादयन्ति। तन्नसमीचीनम् अन्तोदातत्वापतेः। अत्र मेदिन्यां (१२३।८) यथा- इन्द्रः शक्रादित्यभेदे योगभेदान्तरात्मनि शक्रार्थस्य इन्द्रस्यपर्यायः यथामरे (१।१।४१-४४)।

**इन्द्रो मरुत्वान् मधवा विडौजः पाकशासनः।**
**वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः।।**
**विष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः।**
**सुत्रामा गोत्रमिद् वज्री वासेवावृत्रहावृषा।।**
**वास्तोस्पतिः सुरपतिः बलारातिः शचीपतिः।**
**जम्मभेदी हरिहयः स्वराण्नमुचिसूदनः।।**
**सङ्०क्रन्दनो दुच्व्यव्यवनस्तुराषाणमेघवाहनः।**
**आखण्डलः सहस्त्राक्षाः ऋमुक्षा।।**

कल्पद्रुमेऽन्यपर्यायः (प्र०पृ० २०६) यथा-महेन्द्रः कौशिकः पूतक्रतुः विश्वम्भरः हरिः पुरदंशा शतधृतिः पृतनाषाट् अहिद्विषः इति जटाधरः। वज्रपाणिः देवराजः पर्वतारिः पर्जण्यः देवताधिपः नाकनाथःपूर्वदिकूपतिः पुलोमारिः अर्हः प्राचीनवर्हिः तपस्तक्षः इति शब्दरत्नावली। तस्य चतुर्दश नामभेदा यथा-

**इन्द्रश्च विश्वभुग्ज्ञेयो विपश्चित्तदनन्तरम्।**
**विभुः प्रभुः शिखिश्चैव तथैव मनोजवः।**
**तेजस्वी साम्प्रतस्त्विन्द्रो बलिर्भाव्यस्त्वनन्तरम्।।**
**अद्भुतस्त्रिदिवश्चैव दशमन्त्विन्द्र उच्यते।**
**सुशान्तिश्च सुकीर्तिश्च ऋतधातादिवस्पतिः।।**
**इति भूता भविष्याश्च इन्द्राज्ञेयाश्चतुर्दश।।**

इति देवी पुराणे कालव्यवस्थाध्याये। अन्य ञ्च कल्पद्रुमे तत्रैव।

विष्कुम्भादि सप्तविंशतियोगान्तर्गतषड्विंशयोगः। तत्र जातफलम्।

**प्रतापशीलो बलवान् गुणज्ञः**
**श्लेषमाधिकः श्रीकमलाभ्यपेतः।**
**किलेन्द्रयोगे यदि जन्मकाले,**
**महेन्द्रतुल्यः पुरुषः प्रसन्नः।।** इति कोष्ठ प्रदीपः

कुटजवृक्षः रात्रिः इति धरणी। उपद्वीप विशेषः। इति शब्दमाला। परमेश्वरः इति वेदान्तः। इन्द्रो मायाभिः पुरुरूप ईयते इति श्रुतिः) इन्द्रियम् । श्रेष्ठः प्रथमः यथा नरेन्द्रो राजा पक्षीन्द्रो गरुडः। इत्यादिः।

इन्द्रः देवराजः। स तु अदितिपुत्रः पूर्वादिक् पतिश्च। तस्य भार्या शची। पुत्रा जयन्तः १ ऋषभः २ मीढ्वांश्च ३। अस्त्रं वज्रम। वाहनम् ऐरावतः। पुरी अमरावती। वनं नन्दनम्। वाचस्पत्ये यथा-द्वादशादित्यमध्ये आदित्यमेव। ते च अदित्यां कश्यपेनोत्पादिताः धातोऽर्यमा च मित्रश्च वरुणोऽशुभगस्तथा इन्द्रोविवस्वान पूषा च पर्जन्यो दशमो स्मृतः। ततस्त्वष्ट्रा ततो विष्णुरजघन्यो जघन्यजः। विष्णु। प्रायः उपर्युक्त वद् अग्रेऽपि। एवमेव वाचस्पत्ये (द्वि० पृ० ९४०)

**इतर**—इना कामेन तीर्यते। तृ धातोः ऋदोरप्। (पा०सू० ३।३।५७) इतं गमनं करोति वा। तत्करोति तृदाचष्टे (वा० ३।१।२६५) इतिणिच्। यद्वा इतेन ज्ञानेन क्षीते। प्रातिपदिकाद्धात्वर्थे इति णिच् बाहुलकादरः। यद्वा इ इत्यव्ययमपकर्षे द्विवचनविभज्योपपदे (पा०सू० ५।३।५७) तरबीयसुनाविति तरप् द्रव्यप्रकर्षत्वान्नामुः। अत्रामरः ( २।१०।१६)

**विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः।**
**निहीनोऽपसदो जात्मः क्षुल्लकश्चेतरश्च सः।।**

तत्रैवान्यार्थे (अम० ३।१।८२) यथा-

**भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि**

प्रायश एवमेव कल्पद्रुमादिषु। (प्र०पृ०२०५) यथा रघुः(२।३१) वामेतरस्तस्यकरः प्रहर्तुः नखप्रभाभूषितकङ्०पत्रे।

**इत्वरी**—एति तच्छीला इण्नशजिसर्तिभ्यः (पा०सू० ३।२।१६३) क्वरप् इति क्वरप् टिड् ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ् क्वरपः इति ङीप्। इत्यर्थसत्यां पथिके क्रूर कर्मणि च त्रिषु इति मेदिनी। (१३१।११५) अमरे (२।६।११) यथा- पुंश्चलीचर्षणीबन्धक्यसती कुलटेत्वरी। स्वैरिणी पांशुला च स्यात्। कल्पद्रुमे यथा- अभिसारिकेति हेमचन्द्रः। एवमेव वाचस्पत्यादिष्वपि।(शब्द प्र० पृ०२०५)

**इदम्**—त्रि०। एति इण् गतौ धातोः इणो दमुगिदिदशपादीवृत्तिः यथा इन्दति। इति परमैश्वर्ये इन्देःकर्मिनलोपश्चेति दीक्षितः। पुरोवर्त्तिवाचक सर्वनाम। अत्र वाचस्पत्यम् (द्वि० पृ० ९२६) पुरोवर्तिनि दृश्ये बुद्ध्योपस्थापिते -

**इदमस्तु सन्निकृष्टं समीपवर्ति चैतदोरुपम्।**
**अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्।।**

इत्युक्तेः सन्निकृष्ट वाचित्वमस्य। अतएव अस्येति-प्रत्यक्षादि सन्निधापितस्य जगत इदमात्रिदशः एवमेव कल्पद्रुमादिषु।

**इद्धा**—अव्यः। इन्धः धाञ् नि०। प्राकाश्ये स्वरादिः समिद्धमिद्धेश महो ददासि। इति वाचस्पत्यम्।

**इन्द्राणी**—इन्द्रस्य ऐश्वर्य शालिनः सुरराजस्य वा पत्नी। इन्द्रवरुण भवशर्वरुद्रमृडहिमारण्य-यवयवनमातुलाचार्याणामानुक् इति ङीबानुकौ णत्वञ्च। (पा०सू० ८।४।२।) यथामरे (१।१।४५) तस्य तु प्रिया पुलोमजा शचीन्द्राणी। मेदिन्या (४७।३५) पौलोमीति। कल्पद्रमे (प्र० पृ० २१२) यथा-पूत क्रतायी इति जटाधरः माहेन्द्री जयवाहिनी ऐन्द्री शतावरी,इति शब्द रत्नावली।

**यथेन्द्राणी मेहेन्द्रस्य लक्ष्मीलक्ष्मीपतेर्यथा।**

इति भविष्यपुराणे षट् पञ्चमीव्रतकथायाम् इन्द्रशक्तिः - यथा- ऋग्वेदे (१।२२।१२) इहेन्द्राणीयमुपव्येवरुणानी। इन्द्राणी इन्द्रस्यसूर्यस्य वायोर्वा शक्तिम्। इति दयानन्द सरस्वतीकृतमालाम्। नील सिन्धुवारवृक्षः। स्यूलैला। सूक्ष्मैला इति राजनिर्घण्टः। अष्टमातृकान्तर्गतमातृका विशेषः।। इति स्मृतिः। वाचस्पत्ये ( द्वि०पृ०९१४) अन्यापि व्युत्पतिः यथा-इन्द्र इव आनयति जीवयति रोगोपशमनेन।

**ई**—अव्य०। ई विषादेऽनुकम्पायां लक्ष्म्यां पुनख्ययम्। इति मेदिनी। (१७८।४) कल्पद्रुमे (प्र०पृ० ११५) यथा- क्रोधः दुःखभावनम्, प्रत्यक्ष सन्निधिः इति हेमचन्द्रः। एवमेव वाचस्पत्यादिषु।(पृ० १००६)

**उ**—अयमव्ययोऽनव्ययानेकार्थश्च। तद्व्युत्पत्तिर्यथा-अवनम्। उङ्० शब्दे धातोः क्विप्। (पा०सू० ३।२।१७८) तुग्न। (पा०सू० ६।१।८५) डुः वा। अस्यानेकार्थाः यथा मेदिन्याम् उ सम्बोधन शेषोक्तयोरनुकम्पा-नियोगयोः। पादस्य पूरणे पादपूरणेऽपि दृश्यते।। कल्पद्रुमे (प्र०पृ० २१८) यथा- प्रश्नः अङ्०गीकारः इति हेमचन्द्रः। इदमेव उङ्० इति ख्यातम्।

उमेति मात्रा तपसो निषिद्धा, पश्चादुमायां सुमुखी जगाम्। इति कुमारे (१।२६) शिवेऽर्थे पुलिङ्०गोऽयं शब्दः। तद् व्युत्पतिर्यथा अतति विश्वमयत्वात् सर्व व्याप्नोतीति। अत धातोडुः। तत्रैव कल्पद्रुमे यथा-शिवः इति त्रिकाण्डशेषः।

**अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः।**
**मकारेणोच्यते ब्रह्मा प्रणवेन त्रयो मताः।।**

इति पुराणे ब्रह्मा इति कश्चिदेकाक्षरकोषः।। वाचस्पत्ये (प्र०पृ०६०५४) चन्द्रमण्डलमप्यर्थः। प्राय एवमेवान्यकोशेषु।

**उ उमेशः**—इत्यत्र निपात (पा०सू०.१।१।१४) एकाजनाङिति प्रगृह्य संज्ञायां प्रकृति (पा०सू०६।१।१२५) भावः। अतो न सन्धिः। उमेशः = महादेवः उमायः ईशः पतिः इति विग्रहे। महादेवस्य पर्यायः यथामरे- (१।१।३०-३४)

**शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः।**
**ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः।।**
**भूतेशः खण्डपरशुगिरीशो गिरिशो मृडः।**
**मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः।।**
**उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्।**
**वामदेवो महादेवो विरुपादा स्त्रिलोचनः।।**
**कृतानुरेताः सर्वज्ञ धूर्जटिर्नीललोहितः।**
**हरः स्मरहरो भर्गस्त्रयम्बकस्त्रिपुरान्तकः।।**
**गङ्०गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः।**
**व्योमकेशो भयो भीमः स्थाणू रूद्र उमापतिः।।**
**अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः।**

एवमेव कल्पद्रमादिषु।(प्र०पृ०२१)

**उच्चैस्**—अव्य। उच्चीयते। उदिचैडौसिः (उ०५।१२) इति डैसि प्रत्ययः। महत्युच्चैः इत्यमरः। (३।४।१७) तुङ्०गरवे महित उर्द्धदेशजाते इति वाचस्पत्यम्। (द्वि० पृ०१०६४) एवमेव शब्दकल्पद्रुमादिषु (शब्द प०पृ० २२०) उच्चैरुदात्तः (पा०सू० १।२।२९) पाणिनि सूत्रम्।

**उत्थानम्**—उद् उपसर्ग पूर्वक ष्ठा गति निवृत्ताविति भावे (पा०सू० ३।३।११५) ल्युट् प्रत्ययः। उद् + स्थानमित्यत्र आदेः (पा०सू० १।१।५४) परस्य ति सहकारेण उदः (तत्रैव - ८।४।६१) स्थास्तम्भोः पूर्वस्ये ति पूर्वसवर्णे धकारे पाक्षिके (तत्रैव - ८।४।६५) लोपे दकारस्य चर्त्वेकृते उत्थानमिति। अत्रामरः (३।३।११८)।

उत्थानं पौरुषे तन्त्रे सन्निविष्ठोद्गमेऽपि च मेदिन्या (८५।४१) यथा- उत्थानमुद्यते तन्त्रे पोरुषे पुस्तकेरणे। प्राङ्०गणोद्गम हर्षेषु मलवेगेऽपि न द्वयोः।। कल्पद्रमे (३।३।११८) यथा-सैन्यं युद्धं पौरुषं पुस्तकम् उद्यमः उद्गमः यथा रघुवंशे-

**निदर्शयामास विशेष दृश्य -**
**मिन्दुं नवोत्थानमिवेन्दुमत्यै।।**

हर्ष वास्तवन्तः अङ्०गनम्, चैत्यः धनार्जननिमित्ता चेष्टा यथा मनुः (६।३१) भ्रातृणामविभक्तानां यद्युत्थानं भवेत्सह। न पुत्रभागं विषमं पिता दद्यात् कथञ्चन।।

तन्त्रं तत्तु स्वमण्डलम्। सैन्यं चिन्ता च सन्निविष्टः उपविष्टश्चेत्यमरभारतौ। गात्रोत्तोलनम् पुनर्जीवनम्। मरणानन्तरंपुनर्जीवनलाभः। प्रायः एवमेवान्य कोशेषु। वाचस्पत्ये (मनु० ९।२१५।) प्रबोधेऽप्यम् शब्दः।

**उत्तम्भनम्**—उद् उपसर्गपूर्वक स्तभ् प्रतिष्टम्भे धातोः भावे ल्युट् स्तम्भुरोधने श्नुविधौनिर्दिष्टः सोत्रौ वा धातुः। स्थास्तम्भोः इति पवर्गीयोपध निर्देशस्योभय साधारणत्वात्। उद् + स्तम्भनभित्यत्रापि उत्थानमिव साधनिका। अवलम्भने तत् साधने करणे ल्युट् (वाच०पृ०१०९)।

**उत्तरः**—त्रि०। उत्तरति। उत् उपसर्गपूर्वके तृ प्लवनतरणयोः धातोः पचाद्यच् प्रत्ययः। यद्वा अतिशयेनोद्गतः। तरप् (पा०सू० ३।१।१३४) द्रव्यप्रकर्षत्वान्नामुः।

**उत्तरं प्रतिवाक्ये स्यादूर्ध्वो दीच्योत्तमेऽन्यवत्।**
**उन्तरस्तु विराटस्यतनये दिशिचोत्तरा।। इति विश्वः।**

(विश्वः १३३।९९) यथा-

**उपर्युदीच्य श्रेष्ठेष्वप्युत्तरः स्यादिति। मेदिन्यां यथा-**
**उत्तरा दिग्विशेषे च स्नुषायामर्जनुस्य च।**
**विराटस्य सुते नास्यादूदर्ध्वोदीच्योत्तमे त्रिषु।।**

नपुंसकं प्रतिवाक्येऽथोद्धारश्चोद्धता वृणे।
प्रतिवाक्ये यथा माघः(२।२२) -

**वचस्तस्य सपदि क्रियाकेवलमुत्तरम्**

तस्य व्युत्पत्तिः ऊतीर्यते निस्तीर्यते प्रकृताभियोगोऽनेन। तस्य स्वरूपं यथा कल्पद्रुमे (प्र०पृ० २२४)

**पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम्।**
**अव्याख्यागमयमित्येवमुत्तरं तद्विदोविदुः।।**

तस्य भेदाः -

**मिथ्या सम्प्रतिपत्तिश्च अत्यवस्कन्दनं तथा।**
**प्राङ्०न्यायश्चेत्तराः प्रोक्तश्चत्वारः शास्त्रवेदिभिः।।**

इति नारदः (कल्पद्रमे एव)

श्रेष्ठे यथा- रघुः (१३।७।)-

**नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते।**

अन्तरेयथा मनुः (२।१३६)-

**वित्तं बन्धुर्वयः कर्म विद्याभवति पञ्चमी।**
**एतानि मान्यस्थानानि गरीयोयद् यदुत्तरम्।।**

कल्पेद्रुमे तत्रैव - स्वनामाख्यात पर्वतः। यथा-दक्षिणस्योत्तरो गिरि। इति रामायणे।। उत्तरयति संसारादिति व्युत्पत्तेः शिवः, हरिः इति। प्रायः एवमेव वाचस्पत्यादिषु। (द्वि०पृ० १०९३) वाचस्पत्ये किञ्चिदन्यच्च यथा- दिग्देशकालपरत्वेऽपि अस्य स्वाभिधेया पेक्षावधिनियमरूप व्यवस्थावाचित्वात् सर्वनामतया तत्कार्यम्। उत्तरे ग्रामाः उत्तरस्यै नगर्यै। उत्तरस्मिन् दिने, संज्ञायां तु न सर्वनाम कार्यम्। उत्तराः कुरवः। इत्यादि।

**उत्तरपूर्वा**—स्त्री०। उत्तरस्याः पूर्वस्यादिशोऽन्तराला दिक्। दिक्समासः। (पा०सू० २।१।५०) दिङ्०नामसमासे वा एवास्य सर्वनामकार्यम्। योत्तरा सा पूर्वा यस्य मुग्धस्य एवं बहुब्रीहौ तु न सर्वनाम कार्यमिति भेदः। तेन तादृशार्थेऽपि अस्य, वृत्तित्वे त्रि०। सिद्धान्तकौमुद्यां तु योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै। उत्तरपूर्वयै इति। प्रायएवमेव वाचस्पत्यादिषु। ( पृ० १०९६।)

**उद्गाता**—उदगायति साम। गै शब्दे धातोः तृन्तृचौ (उ० २।९४) शंशिक्षादिभ्यः संज्ञायां चानिटौ इति तृच् प्रत्ययः। सामवेदज्ञः। सामवेदविद् ब्राह्मणः। इत्यमरः। (२।७।१७) यथा मनुः (८।२०९) -

**होतावापि हरेदश्वमुद्गाता चाप्यनः कृपे**

प्राय एवमेव कल्पद्रुमादिषु। (प्र०पृ २३९)

**उदच्**—उत् अञ्चतीति विग्रहे क्विप् प्रत्ययः अत्र वाचस्पत्यम् (द्वि० पृ०११३६) ऊर्ध्वगते उत्तरे देशे, अनन्तरे, काले उत्तरदिक् देशकाल वृत्तौ च। उत्तरदिशि स्त्री०। डीप् - अचोऽल्लोपे उद्यादेशे दीर्घः उदीची। तत अस्तीति तस्य लुक्। प्रथमापञ्चमीसप्तम्यन्तार्थे वर्तमाने दिग्देशकाले अव्य० अयने द्वे गतिरुद्ग दक्षिणार्कस्य वत्सरः अमरः उपवीणयितुं ययौ रवेरुदगावृत्तिपथेनारदः रघुः। संपूयेत पुनात्युदगग्राम्याम् पवित्राभ्याम् एतत् सर्वम् वाचस्पत्येएव।

**उदन्**—न०। उन्द धातोः कनिन् प्रत्ययः। अत्र वाचस्पत्यम्। ( द्वि०पृ० ११३७) उदके। उदकशब्दादेशो यमित्यन्ये अन्वे एवायं शब्द इत्यपरे धाराश्चर्मेवोदभिर्वुन्दन्ति

भूम ऋग्वेदः। (१।८५।५) अवत्मना भरते फेनमदन् ऋग्वेदः। (१।१०४।३) उदन् उदनीत्यर्थः परमेव्योमन् इति वत् सप्तम्यालुक् नलोपाभावश्च।

**उपत्यका**—उप समीपे आसन्ना भूमिः। उप + उपाधिम्यां त्यकन्ना (पा०सू०५।२।३४) सन्नारूढयोः इति त्यक्न प्रत्ययः। त्यकनश्चे (वा० ७।३।४५) निषेधः इतीत्वाभावः। पर्वतनिकटभूमि रित्यमरः। (२।४।७) यथा रघुः।(४।४६)

**मरीचोदभ्रान्त हारीता मल[illegible]रूपत्यका।**

अभिधानचिन्तामणौ (४।१।१०१) यथा - गिरीत्यधिकृत्य अधोभूमि रधित्यकेति। प्रायः एवमेव कल्पद्रुमादिषु। (प्र०पृ० २५२)

**उपधा**—अन्य०। उपधीयते शुद्धिज्ञानमत्र। उप उपसर्ग पूर्वक डुधाञ् धारणपोषणयोः धातो आतश्चोपसर्गे (पा०सू० ३।३।१०६) इत्यङ०। अत्रामरः (२।८।२१)–

उपधा धर्माथैंयत्परीक्षणम्। आद्येन कामार्थोभयसंग्रहः। कल्पद्रुमे (प्र०पृ० २५४) यथा- धर्मार्थकाम-मोक्षद्वारा परीक्षा यथा-

**धर्मार्थकाममोक्षैश्च प्रत्येकं परिशोधनेः।**
**उपेत्यधीयते यस्मादुपधा तेन कीर्तिता।।**
**अथकामोपधाभ्यान्तु भार्याः पुत्रांस्तु शोधयेत्।**
**धर्मोपधाभिर्विप्रांस्तु सर्वाभिः सचिवान् पुनः।।**

इति कालिका पुराणम्।

अलोऽन्त्यात्पूर्व (पा०सू १।१।६५) उपधेति पाणिनि सूत्रम्। वाचस्पत्ये तु- छलेऽर्थे यथा। उपधाभिश्चयः कश्चित् परद्रव्यं हरेन्नरः। इति मनुः। उपाये च अयशोभिर्दुरालोके कोपधा मरणादृते। माघः तत्रैव। उपाधौ च। प्रायः एवमेवान्य कोशेषु।

**उपाध्यायी**—उपाध्यायस्य पत्नी। आनुगभावे रूपम् आनुक् कृते तु उपाध्यायानी एव। अत्रामरः (२।६।१५) उपाध्यायान्युपाध्यायी इति। प्राय एवमेव अन्यकोशेषु।

**उपानत्**—उपनह्यते पादावनया। उप उपसर्गपूर्वके नह् बन्धने धातोः क्विप् (पा०सू० ३।३।७६) प्रत्ययः। न हि वृत्तिवृषिव्यधिरुचिसहितनिषु (तत्रैव ६।३।११६) क्कौ इति दीर्घः। अत्रामरः (२।१०।३०) अथ पादुका पादूपानत्स्त्री। कल्पद्रुमे (प्र०पृ०२६३) यथा - चर्मादि निर्मितपादकोशः पादव्यतिरेकेणात्मोपानदवहन निषेधो यथा-

**नाक्षैः क्रीडते कदाचित स्वयं नोपानहौ वहेत्।**
**प्रयानस्थो न भुञ्जीत न पाणिस्थां न चासने।।** इति मानवे।

ग्लहं विना कदाचिदपि परिहासेनापि नाक्षदिभिः क्रीडेत्। स्वयमित्यभिधानात् आत्मोपानहौ पादव्यतिरिक्ते. हस्तादिना देशान्तरं न नयेत्। शय्यावस्थश्च न भुञ्जीत्। हस्ते च प्रभूतमन्नं कृत्वा क्रमेण न खादेत्। आसने भोजनपत्रकं निधाय न भुञ्जीत्। इति तट्टीकायां कुल्लूक भट्टः।

यथानैषधे (१।१२३) -

कृतावरोहस्य हयादुपनहौ। सुश्रुतः (२४ अध्याये।) चिकित्सास्थाने यथा -

**अनारोग्यमनायुष्यं चक्षुषोरुपधात कृत्।**
**पादाभ्यामनुपान्दभ्यां सदा चक्रमणं नृणाम्।।**

एवमेव वाचस्पत्यादिषु।(द्वि० पृ० १३५५)

**उपांसुः**—अव्यः। उपगत अंशवः किरणा अत्र। उपांसुर्जपभेदे स्यादुपांशु विजनेऽव्ययम्। इति विश्वः (१६९।३०), हैमः (३।७।५५) मेदनीकारश्च। (१६३।१७) अमरे (२।८।२३) यथा-विविक्तविजनञ्छन्न निःशलाकास्तथा रहः। रहश्चोपांशु चालिङ्०गे इति। एवमेवान्यकोशेषु।

**उपेन्द्रः**—इन्द्रमुपगतः अनुजत्वादिति। उप + इन्द्र इत्यवस्थायाम् आद्गुणः (पा०सू० ६।१।८७) इति पकारादकारस्य तस्मादिकारस्य च पूर्वपरयोः कण्ठतालु स्थानिकयोः स्थाने तथा विध एको गुण एकारः। अस्य पर्यायः यथामरे (१।१।१८-२१)-

**विष्णुर्नारायणो कृष्णो वैकुण्ठो विष्टरश्रवाः।**
**दामोदरो हृषीकेश केशवो माधवःस्वभूः।।**
**दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः।**
**पीताम्बरोऽच्युतः शाङ्र्गी विष्वक्सेनो जनार्दनः।।**
**उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः।**
**पद्मनाभो मधुरिपुःवासुदेवस्त्रिविक्रमः।।**
**देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः।**
**वनमाली बलिध्वंसी कंसारातिरधोक्षजः।।**
**विश्वम्भरः कैटजिद् विधुः श्रीवत्सलाञ्छनः।**
**पुराणपुरुषो यज्ञपुरुषो नरकान्तकः।**
**जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः।। इत्यादि।।**

कल्पद्रमे (प्र० पृ० २७०) यथा- कश्यपादृषेः अदित्यां वामनावतारे इन्द्रस्यानन्तरं जातत्वात् तथात्वम्। विष्णुः। उपेन्द्रस्यापराम् व्युत्पतिमाह हरिवंश (७५।४६) व्यासः यथा-

**ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः।**
**उपेन्द्र इति कृष्णत्वां गास्यन्ति दिवि देवताः।।**

तथाच श्रीमद्भागवते (८।२३।२१-२३)-

**कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च।**
**लोकानां लोकपालानामकरोत् वामनं पतिम्।।**
**वेदानां सर्वदेवनां धर्मस्य यशसः श्रियः।**
**मङ्०गलानां व्रताना ञ्च कल्पं स्वर्गापपवर्गयोः।।**
**उपेन्द्र कल्पयाञ्चक्रे पतिं सर्वं विभूतये।**
**तदा सर्वानि भूतानि भृशं मुमुदिरे नृप।**

प्राय एवमेव वाचस्पत्यादिषु।(द्वि० पृ०१३६१)

केचित्तु उपगत इन्द्रोऽस्य इति व्युत्पादयन्ति तन्न समीचीनता मर्हति। कुगति प्रादयः (पा०सू० २।२।१८) इत्युपन्यास विरोधात्।

**उभ**—उद् गतौ धातौः भक्, उभ पूर्तौ धातोः क प्रत्ययो वा। अयं सर्वनामसंज्ञकः। द्वित्वविशेष्टेएकत्वापेक्षबुद्ध्या प्रथमं द्वित्वस्येवजननेन द्वित्वस्यैकत्वज्ञानद्वारा गम्यमानस्य पूर्वसाध्यत्वाद्वोपचारात् इति वाचस्पत्यम।(द्वि० पृ०१३६२)

**उभयः**—त्रि०। अयमपि सर्वनामसंज्ञकः। उभौ अवयवौ यस्य। उभ + तयप् उभादुदातो नित्यम् (पा०सू० ५।२।४४) इति तयपोऽयजादेशः। अत्र शब्दकल्पद्रुमः। (प्र०पृ० २७०) कथमुभयो देव मनुष्या इति। यतो बहूनामुभावयवो न घटतः। नैष दोषः। अत्र हि द्वौ राशी समुदायस्यायवयवौ। एको देवानमपरो मनुष्याणा मिति। उभादुदातो नित्यमिति नित्य ग्रहणस्य प्रयोजनं वृत्तिविषये उभ शब्द प्रयोगो मा भूत उभयशब्दस्य यथा स्यादिति। यथा मनुः- तत्रैव

**पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति।**
**अपूजितन्तु तद् भक्तमुभयं नाशयेदिदम्।।**

वाचस्पत्ये (द्वि० पृ० १३६२) यथा -

द्वित्वविशेष्टे अस्य द्वित्वबोधकत्वेऽपि एकबहुवचनान्ततयैव प्रयोगः न द्विवचनप्रयोगः इति।

**उशना**—वश कान्तौ धातोःवशे कनसिः (उ० ४।२३९) ग्रह्यादित्वात् (पा०सू० ६।१।१६) सम्प्रसारणम्। ऋदुशनस्पुरुदंशोऽनेहसां चेत्यनङ्० विभक्ति कार्यम्। अत्रामरः (१।३।२५)

**शुक्रोदैत्यगुरुः काव्य उशना भार्गवः कविः।**

यथाकुमारसम्भवे (३।६)

**अध्यापितस्योशनसापि नीतिम्।**
**प्रयुक्तराग प्रणिधि र्द्विषस्ते।।**

दैत्यगुरौ यथा महाभारते (७६।६) ययाति संवादे-

**पौरोहित्येन याज्यत्वे काव्यन्तूशनसं परे।**

प्राय: एवमेव शब्दकल्पद्रुमादिषु। (प्र० २७५)

**उष्णिक् (ह्)**—स्त्री०। उत् स्निह्यति। उत् + स्निह् + क्विन्। निपतनात् उपसर्गान्तलोप: षत्वं च। अत्र कल्पद्रुम: (प्र० २७५) सप्ताक्षरच्छन्द: यथा छन्दोमञ्जर्याम् -

**उक्थात्युक्था तथा मध्या प्रतिष्ठान्यासुपूर्विका।**
**गायत्र्युष्णिगनुष्टुप् च वृहती पंक्तिरेव च।।**

उष्णिक् सप्ताक्षरावृत्ति:। सा च त्रिधा मधुमती कुमारललिता मदलेखा भेदात्। उदाहरणपूर्वकं तल्लक्षणं यथा तत्रैव - ननगि मधुमती।

**रविदुहितृतटे वन कुसुमनतिः।**
**व्यधितमधुमती मधुमथनमुदम्।।**

कुमारललिता जस्गा:

**मुरारि तनुवल्ली कुमार ललिता सा।**
**व्रजेण नयनानां ततान मुदमुच्चैः।।**

मसगौ स्यान्मदलेखा-

**रङ्०गेवाहुविरुग्रात् कुम्भीन्द्रानमदलेखा।**
**लग्नाभून्मुरशत्रोः कस्तूरी रस चर्चा इति।**

प्राय एवमेव वाचस्पत्यादिषु। (वाच० द्वि० पृ० १३८१)

**ऊ**—अयं शब्दोऽव्ययोऽनव्ययश्चानेकार्थश्च। वेञ् धातो: क्विप् प्रत्यय:। अत्र मेदिनी। (१७८।५)

**ऊ वाक्यारम्भरक्षानुकम्पास्वपि दृश्यते।।**

कल्पद्रुमे (प्र० पृ० २७८) यथा -

अवतीति ऊः। इति व्युत्पत्तौ अव् धातो: क्विप् प्रत्यये ज्वरत्वरेत्यूठि (पा०सू०

६।४।२०) कृते, महेश्वरः अर्थः। इति पुरुषोतमः। चन्द्रः शब्दरत्नावली। रक्षाकर्तरि त्रि०। एवमेव वाचस्पत्यादिषु।(द्वि० पृ०१३८३)

**ऊं इति**—ऊ इति इत्यवस्थाया मितौ परे ऊं ( पा०सू० १।१।१८) इत्यनुनासिक ऊं इत्यादेशे प्रगृह्य संज्ञायां प्रकृतिभावः एवमेव वाचस्पत्यादिषु।(द्वि० पृ० १३८३)

**ऊँरुदध्नी**—ऊरू प्रमाणमस्या इति विग्रहे प्रमाणे द्वयसच्दध्नञ्मात्रचः (पा०सू० ५।२।३७) इति दध्नच् प्रत्यये टिड्ढाण ञ् द्वय सजदध्न ञ्मात्रचतयप्ठक्ठ ञ्क्वरपः (तदेव - ४।१।१५) इति ङीप् प्रत्ययः। ऊरु शब्दस्य व्युत्पतिर्यथा-ऊ आच्छाद्यते इति। ऊर्ण आच्छादने धातोः ऊणर्तिर्नुलोपः (ऊ० १।३१) इत्युणादिसूत्रेण कर्मणि कुः नलोपश्च। जानुपरिभागः तत्पर्यायः सक्थी इत्यमरः। (२।६।७३) एवमेव कल्पद्रुमे(प्र० पृ०२७९) वाचस्पत्यादिषु (द्वि०पृ० १३८५) च।

**ऊरुद्वयसी**—अत्र द्वयसच् प्रत्यये सति ङीप् प्रत्ययः।

**ऊरूमात्री**—अत्रापि मात्रच् प्रत्यये ङीप्।

**ऊरुभिन्नी**—ऊरूभिन्नौ अंसयुक्तौ यस्याः। बहुव्रीहेश्चान्तोदात्तादिति (पा०सू० ४।१।५१) ङीप् प्रत्ययः।

**ऋणार्णम्**—ऋण ऋणम् इत्यवस्थायां प्रवत्सतरकम्बलवसनदशार्णानामृणे ( वा० ६।१।८९) इति वृद्धिरूपैकादेशः। ऋणस्यापनयनाय यदन्यदृण क्रियते तद् ऋणार्णम्। ऋणशब्दस्य व्युत्पत्तिर्यथा - अर्यते स्म। ऋगतौ धातोः क्त (पा०सू० ६।१।१०२) प्रत्ययः। ऋणमाधमर्ण्ये (पा०सू० ८।२।६०) इति णत्वम्। अत्रामरः (२।९।३) ऋणं पर्युद ञ्चनम्, उद्धारः। हैमैन (२।१३५) यथा ऋणं देये दुर्गे इति। कल्पद्रुमे (शब्द प्र० पृ०२८४) यथा ऋणतीति ऋण गतौ तस्मात् कः। इति व्युत्पत्या वाच्यलिङ्०गः। गन्तागमनशीलः। यथा ऋग्वेदे (६।१२।५) सद्योः यः स्यिन्द्रो विषितोयवीयानृणो न तायुरतिधन्वा शट्। ऋणः शीघ्रगन्ता इति भाष्यम्। एवमेवान्यकोशेषु।

**ऋते**—अव्य०। ऋतीयते। ऋतिः सौत्रः (पा०सू० ३।१।२९) धातुः। ततः के प्रत्ययः। वर्जनम्। अस्य पर्यायः नानाशब्दे द्रष्टव्यः।

अवेहि मां प्रीतिमृते तुरङ्०मात् इति रघुः (३।८३) तथा कुमारे (२।५७)-

अंशदूते निषिक्तस्य नीललोहितरेतस। एवमेव कल्पद्रुमादिषु।(प्र०पृ० २८६)

**ऋत्विक्**—ऋतौ यजतीति। ऋत + यज् ऋत्विग्दृधृक्स्त्रग्दिगुणिग ञ्चयुजिकुञ्चां च (पा०सू० ३।२।५९) इति क्विन्नन्तो निपातितः। अत्रामरः (२।७।१७) आग्नीध्राद्याधनैर्वार्या ऋत्विजो याजकाश्च ते।

कल्पद्रुमे (प्र० पृ० २८६) यथा भरतः। कुरवः। वाग्यतः। वृक्त वर्हिषः। यतचक्षुः। मरुतः। सबाधः। देव यवः। इत्यष्टावृत्विङ्० नामानि। इति वेदनिघण्टौ तृतीयाध्याये अयं हि नायकस्य धर्मसहायः यदुक्तं साहित्यदर्पणे (सा०द० ३।५१) - ऋत्विक् पुरोधसः स्युब्रह्मविदस्तापसास्तथाधर्मे। एवमेव वाचस्पत्यादिषु। (वाच० द्वि० पृ०१४४६)

**ऋभुक्षाः**—ऋभुक्षः स्वर्गः वज्रं वा अस्यास्तीतीनिः। पथिमथ्यृ (पा०सू० ७।१।८५) भक्षामात् इतोत्सर्वनामस्थाने (पा०सू० ७।१।८६) इत्यादिनासिद्धम्। यद्वा ऋच्छतीति। अर्तेभुक्षिनिक् प्रत्ययः इति शब्दकल्पद्रुमः। (प्र०पृ० २८७) अस्य पर्याय इन्द्र शब्दे द्रष्टव्यः। यथा ऋग्वेदे (४।२७।१) उपनोराजा अध्वरिमृभक्षाः अभुक्षाः ऋभवः इति तद् भाष्यम्।

**ऋधक**—अव्य०। सत्ये वियोगे, शैघ्र्ये सामीप्ये लाघवे समृद्धे, वर्धके, इति वाचस्पत्यम्। (द्वि० पृ०१४४९)

**ए**—अयं शब्दोऽव्ययानव्ययोऽनेकार्थश्च। अव्यये यथा मेदिन्याम् ( मेदिनी १७८।८) ए स्मृतावप्यसूयानुकम्पा-मन्त्रण हूतिषु। कल्पद्रुमे (प्र०पृ० २९०) यथा- एति प्राप्नोति सर्व विश्वमिति। इण् धातो रच् प्रत्ययः। सर्वविष्णुमयं जगदिति वाक्यादस्य तथात्वं। विष्णु इत्येकाक्षरकोश अपि। एवमेव वाचस्पत्यादिषु। (द्वितीय पृष्ठ १४४९)

**एकः**—एतेति। इण् गतौ धातोः इण्भीकापाशल्पतिमर्चिम्यः कन् (उ० ३।४३) इति कन् प्रत्ययः। अत्रामरः (३।१।८२) एकाकी त्वेक एककः। भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि। मेदिन्यां (१।१८) यथा-

**एकं संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु।**

केवले यथा मनु। (मनुः १।३)

**त्वमेको हयस्य सर्वस्य विधानस्यस्वयंभुवः।**

कल्पद्रुमे (पृ०२९०) यथा- अथैकवाचकानि परमात्मा विधुः दितिः गणेशदन्तः शुक्रचक्षुः इति कवि कल्पलता। अग्निः सूर्यः, देवराजः, यमः इति महाभारते वनपर्वणि सर्वनामशब्दोऽयम्। तथा च कौमुद्यां - सर्वादयश्च पञ्चत्रिंशत् इत्युक्ता त्यद्, तद्, एतद्, इदम् अदस् एक, द्वि, युष्मद् अस्मद् भवतु किम् इत्युक्तवान्। यथा शाकुन्तले द्वितीयाङ्०के विश्रान्तेन भवता ममाप्येकस्मिन् कमर्णि सहायेन भवितव्यम् पुं० स्वनामाख्यात् एल वंशीयो नृपतिभेदः। यथा भागवते (९।१५।२) -

**श्रुतायेर्वसुमान् पुत्रः सत्यायेश्च शतंजयः।**
**रयस्यासुत एकश्च, जयस्य तनयोऽमितः।।**

परमेश्वरः। विष्णुः। यथा विष्णुसंहितायाम्।

एकोनैकः सवः कः किम् । परमार्थतः सजातीयविजातीयस्वगत भेदराहित्यादेकः इति भाष्यम्। घटे घटान्तरात् भेदः घट सजातीयभेदः। घटे पटादि भेदः विजातीय भेदः। घटे कपालादिभेदः स्वगतभेदः। वाचस्पत्ये (द्वि० पृ०१४५९) यथा-

एकत्व रूप प्रथमसंख्यान्विते, केवले मुख्ये अन्यार्थे, सत्ये अद्वितीये समाने अल्पे च। प्रायशःसंख्यावाचकस्य संख्यासंख्योसंख्येयोयपरत्वेऽपि एक शब्दस्य भूरिशः, एकल संख्यान्वितपरत्वम्। ते एको घट इत्यादि न तुघटस्यैकः। क्वचित् भाव प्रधाननिर्देशाय परत्वेन संख्या वाचकत्वमपि। द्वयेक्योर्द्विवचनैकवचने (पा०सू० १।४।२२) इह द्वित्वम् एकत्वञ्च। द्व्येक शब्दयोरर्थः। अत्र द्विवचनान्तत्वमेवत्थार्थत्वे लिङ्०गं परत्वेद्व्येकेषामिति स्यात् द्वन्द्वार्थानां संख्यान्वितानां बहुत्वात्। तेन एकद्विवचनशब्दोऽपि एकत्वद्वित्वार्थकः। तत्रार्थे तयोः पारिभाषितत्वात्। अतएव-

**सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङा०म्।**

इति सुपां तिङ् ञ्च संख्यावाचकत्वमुक्तम्। तथा अनेकमन्यपदार्थे (पा०सू० २।२।२४) सूत्रे अनेकपदस्य एकवचनान्ततया प्रयोगातु नास्त्येकत्वम्। यत्र विग्रहेण एकत्वशून्यार्थकता। एक संख्यान्वितपरत्वे अनेके इति स्यात् पतन्त्यनेके जलेधरिवोर्मयः इत्यादौ बहुवचनान्ततया एवानेकशब्दस्य प्रयोगात्। स्वारसिक प्रयोगे तु न लक्षणा। तेन घटस्यैकः इत्यादि न प्रयोगः इति द्रष्टव्यम्। इतरसंख्यास्तु एकत्वस्यानुगमात् द्वित्वादिनामेकत्व बुद्ध्यैव जननाच्च इण् धात्वर्थानुगमात् तस्य अन्वर्थनामता। संख्या च द्रव्यसमवेतो गुणविशेषः। गुणादै चसंख्यान्वयः परम्परयेति विशेषः। एकत्वादेकजातित्वनिराशेन गुणत्व व्यवस्थापनं कणाद सू० वृत्योः कृतं यथा-रूपरसगन्धस्पर्शव्यतिरेकात् द्रव्यान्तर मेकत्वम् क०सू० रुपरसगन्धस्पर्शेति संख्यादिप ञ्चकभिन्न गुणोपलक्षणम् व्यतिरेकादिति व्यभिचारात्। तदयमर्थः एकोघट इति विशिष्टप्रतीतिविशेषण ज्ञानजन्यां तत्र विशेषेणन रूपादि तद् व्यतिरेकेण जायमानत्वात्। न चघटत्वादिकमेव निमितं घटेऽपिजायमानत्वात्, नचैकत्व सतावत् सामान्य सत्तया सहान्यूनानतिरिक्ता वृत्तित्वात् - न च द्रव्यमात्रे सामान्यं तत् द्रव्यत्वेना = न्यूनानातिरिक्त-देशत्वात्। न चान्यूनानतिरिक्त देशत्वेऽपि प्रतीतिभेदत् भेदः, प्रतीति भेदस्य स्वरूपकृत्ये सत्ताऽपिभिद्येत्। विषयभेदकृतत्वे तु विषयभेदानुपपते रुक्तत्वात्, अन्यथा घटत्व कलशत्वयोरपि भेदापतिः। नच स्वरुपाभेदएकत्वमिति भूषणोक्तं युक्तम्। घट स्वरुप भेदश्चेदेकत्वम्। तदा पटादावेकत्व प्रत्ययो न स्यात्। स्वरुपभेदो द्वित्वादिकमित्यपि भूषणंमतमनुपपन्नम्। स्वरूपभेदस्य त्रिचतुरादि साधारण्येन व्यवहार वैचित्र्यानुपपतिरिति भावः। वैया० सू० संख्यानिरूपणपूर्वकं तद्विवक्षादि निरुपणं यथा- अभेदैकत्व संख्याया वृत्तौ भावमिति स्थितिः। कपिञ्जलालम्भवाक्ये त्रित्वन्यायादथोच्यते। उक्त च वाक्यपदीये-

**यथौषधि रसाः सर्वे मधुन्याहित शक्तयः।**
**अविभागेन वर्तन्ते संख्या तां तादृशीं विदुः।।इति।**

परित्यक्तविशेषणं वा संख्यासामान्यम् तत्। उक्त ञ्च-

**भेदानां वा परित्यागात् संख्यात्मा स तथाविधः।**
**व्यापाराज्जातिभागस्य भेदापोहेन वर्तते।।**

अगृहीत विशेषेण यथा रूपेण रूपवान्। प्रख्यावतेन शुक्लादिभेदापोहस्तु गम्यते इति। अस्याः वृत्तौ समासादौ भानं न्यायसिद्धमिति शेषः। इति मतस्थितिः वैयाकरणानाम्। अयम्भावः, राजपुरुष इत्यादौ राज्ञो राज्ञाः राज्ञां वा अयं पुरुषः इति जिज्ञासा जायते विशेष जिज्ञायां सामान्यरूपेण तत्प्रतीतिः शब्दादावश्यकी अतस्तस्यां शक्तिरिति। तस्या एकत्वेन प्रतीतौ न्यायमाह कपि ञ्जलेति। बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात् तद्रूपेणैव भानादेकत्वस्य सर्वतः प्रथमवस्थित्वमस्ति। वस्तुस्तु+जिज्ञासैव नानुभवसिद्धा। तथात्वैवाज्ञानेच्छयोः समान प्रकारकत्वेन हेतुहेतुमद्भावात्तद्रूपेण एव वाच्यता स्यादिति ध्येयम्। तथा च उत्सर्गात् सर्वत्र अभेदैकत्व संख्यैव वृत्तौ प्रतीयते न तु विशेषण। अतएव संख्या तु व्यञ्जकाभावादव्याकता प्रातरादिवद्। यत्र तु व्यञ्जकं किञ्चित् तत्र संख्या प्रतीयते इति वाक्यपदीये उक्तम्।

तेन राजपुरुष इत्यादौ न विशेष संख्या प्रतीतिः। विशेष व्यञ्जकाभावात् त्वत्पुत्रः अस्मद् धनमित्यादौ विशेषेणतत्प्रतीतिः त्वादेश तदभावर्योतद् व्यञ्जकत्वात् तवामावेकवचने इति एक वचने त्वमादेशस्यविधानात् तद् भावादेवद्विबहुत्वयोर्विशेषेण प्रतीतिः। एवं द्रव्यैक्ये एकदेशि तत्पुरुषविधानात् अर्धपिप्पलीत्यादावेकत्व प्रतीतिः। द्वित्वादौ विवादिते तु पिप्पलीद्व्यमित्याद्यवस्यादिति तत्र विशेष संख्याप्रतीतिः।

**एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति।**

श्रुतिः एवमेवाद्वितीयंब्रह्म। अग्रे यत् वाचस्पत्ये अस्ति। तत्त शब्दकल्पद्रुमात् पूर्वमेव लिखितमस्ति।

**एकपदा**—एकः पदो यस्या इति विग्रहः। ऋचिवाच्यायां पादान्ताट्टापि (पा०सू० ४।१।९) कृते एकपदेति।

**एक पदे**—अव्य०। अकस्मादित्यर्थः।

**एक पत्नी**—एकः समानः अन्यो वा पतिर्यस्याः। नित्यं सपत्न्यादिषु (पा०सू०. ४।१।३२) इति एकपति शब्दे नकारान्तादेशे ऋन्नेभ्योऽपि (पा०सू० ४।१।५) इति

डीप्। **सपत्नी** इत्यर्थः। यथा मनुः (९।१८५) सर्वासमेकपत्नीनमेकाचेत् पुत्रिणी भवेत्। **सर्वास्तास्तेन पुत्रेण** प्राह पुत्रवतीर्मनुः। एकः अद्वितीयः पतिर्यस्याः इति विग्रहे पतिव्रता इति कल्पद्रुमः। (प्र०पृ०२९२) यथा मेघदूते (१०)

**तां चावश्यां दिवसगणनातत्परामेकपत्नीम्।**

प्रायएवमेव वाचस्पत्यादिषु। (द्वि० पृ० १४७४)

**एडका**—इलति एलयति वा। इल गतिक्षोपणयोः धातो ण्वुलिडलयोरेकत्वादेङका। (पा०सू० ३।१।१३३) अत्रामरः। (२।९।७३)

मेढ्रोरभ्रोरणोर्णायुमेर्ष वृष्णय एडके। वाचस्पत्ये (द्वि० पृ० १५३५) यथा-

वनच्छागे पृथुशुङ०गे, मेषे, मेषमात्रे च जातित्वात् स्त्रीत्वे अजादित्वात् टापि क्षिपकादीनामिति नात्र इत्वम्। एड इव प्रतिकृतो कन्। मेष सदृशे दक्षिणापथ प्रसिद्धे पशुभदे। एडको नाम दक्षिणपथे मेषकृतिः पशुः तस्येमा ऐडक्यः। कर्क०।

तयोर्मेष मेष्याय च पद्यनैडकीरूणां विन्देत ताः प्रणिज्य निश्लेषयेत। इति शतपथ ब्राह्मणे (शतपथ ब्र० २।५।२।१५) प्रायएवमेवान्यकोशेषु।

**एतद्**—त्रि०। इण् धातोः एतेस्तुट (उ० १।१३२) च इत्युणादि सूत्रेण अतोऽदि स्यात्तस्य तुडागमः। पुरोवर्तिवाचक सर्व नाम शब्दः। बुद्धिस्थे समीपवर्ती।

**इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदोरूपम्।**
**अदसस्तु विप्रकृष्टं तदिति परोक्षे विजनीयात्।।**

इत्युक्तेः समीपवर्त्तिबुद्धिस्थोपलक्षित धर्मावच्छिन्ने एतदोवृत्तिः। क्रियाविशेषणत्वेऽस्य क्लीवता। इति वाचस्पत्यम्। (द्वि० पृ०१५३३) न वा एतन्नियसे इति ऋग्वेदः। (ऋग्वेद - १।१६२।२१) एते वयमी द्वारा कन्येयं कुलजीवितम् इति कुमारसम्भवे। (६।६३) प्रायएवमेव कल्पद्रुमादिषु। (प्र० पृ० २९८)

**एव**—अव्य०। अयनमिति। इण् धातोः इणशीभ्यां (१।९२) वन्निति वन् प्रत्ययः। अत्र वाचस्पत्यम् (द्वि० पृ० १५४०) यथा-

सादृश्ये अनियोगे वाक्यभूषणे चारनियोगे विनिग्रहे परिभवे ईषदर्थे च। विशेषसङ्०गतः अन्ययोगव्यवच्छेदे। यथा-पार्थएव धनुधरः इत्यादौ पार्थान्यपदार्थे प्रशस्त धनुधर्रत्वंव्यवच्छिद्यते। विशेषण सङ्०गतः अयोग व्यवच्छेदे यथा शंखः पाण्डुरः एवेत्यादौ शंखे पाण्डुरत्वायोगो व्यवच्छेद्यते। क्रियासङ्०तः अत्यन्तायोगव्यवच्छेदे यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलत्वोत्पन्न योगोव्यवच्छिद्यते। गन्तरि त्रि०। एवेत्यवधारणानियोगौ पम्यनियोगेषु इत्युक्ता गणरत्ने यथाक्रममुदाहृतम्। अहमेव ददामि अद्यैव।

इहैव। श्रीएव मेस्तु। अद्यैव गच्छ। अत्रानियोगोऽवधारणम्। एवे च नियोगे वार्तिकम्। तत्र क्वेव भोक्ष्यसे इत्यत्र पररुपैकादेशः। एतद्योगे च न च वाहाहैव (पा०सू० ८।१।२४) युक्ते न वस्नाद्यादेशः। ब्राह्मणस्यैव कर्मैतदुपदिष्ट मनीषभिः। एवमित्यर्थे च। एवा इन्द्रोतिभिः ऋग्वेद। (४।३३।७) एवा एवम् भा०। अत्रवेदे एवानुदूर्वे प्रतनु इत्यादि वद्धीत्यर्थः। तत्र गन्तरि एवा न देव्यादितिरनर्वा तैतरीय० (३।१।५) एवागमनशीला भा०। शीघ्र गन्तृत्वात् अश्व पु०। शूरो नाम पतयदभिरेवैः ऋ० (१।१५।८।२)। एवैरश्वैः मा०। करणे भावे वा वन्। गमनसाधने गमने च। एवेन सद्यः पर्येति पार्थिवम् ऋग्वेदः। (ऋ० १।१२।८।३) एवेन गमनसाधनेन गमनेन वा। एवमेव कल्पद्रुमादिषु। (प्र०पृ०२९८) एव शब्दः त्रिलिङ०गेष्वप्यस्ति वाचस्पत्ये तत्रैव। यथा- एवमस्त्यस्य अच् अव्य० टिलोपः एवं क्रियमाणेप्रकारे सुदानूनेवया मरुतः ५।४।१६ एवया एवं क्रियमाण प्रकारेण भा० तृतीये स्थाने याच्।

**एवम्**—अव्य०। इण् - वा० वमु। अत्र वाचस्पत्यम् (द्वि०पृ०१५४१) एवमिति प्रकृतपरामर्श प्रकारेवार्थोपदेश निजयाङ्०गीकारवार्थेषु गणर० उक्तेषु अर्थेषु। क्रमेण उदाहरति तत्रैव प्रकृतपरामर्शे एववादिनि देवर्षो। प्रकारे एवं कुरुते। इवार्थो सादृश्ये अग्निरेवं विप्रः। उपदेशे एवं पठ। निर्देशे एवं तावत्। निश्चये। एवमेव मेतत् कः सन्देहः। अङ्०गीकारे एवं कुर्मः। वार्थेसमुच्चयार्थे आहार्यमेवं मृगनाभिपत्रम्। यथैत मेनवम्। समन्वये, पर कृतौ, प्रश्ने च। तत्र एवं भूतः, एवकृतः इत्यादौ क्रिया विशेषणत्वम्। एवंविधः एवं प्रकार इत्यादौ द्रव्यविशेषणत्वमिति भेदः प्राय एवमेव कल्पद्रुमादिषु (शब्द० प्र०पृ०२९८) अपि।

**ऐ**—अयमपि अव्ययानव्ययानेकार्थोऽपि। तद् व्युत्पत्तिर्यथा- एतेति। आङ्० उपसर्गपूर्वक इण् गतौधातोः णिच् प्रत्ययः। ऐ शब्दो दृश्यते हूतौ स्मृत्यामन्त्रणयोरपि इति मेदिनी। (१७८।८) कल्पद्रुमे (प्र०पृ० ३००) यथा- ऐति प्राप्नोति सर्वम् इति व्युत्पत्या महेश्वरार्थः प्राय एवमेववाचस्पत्यादिषु। (द्वि० पृ० १५४३)

**ऐन्द्री**—इन्द्रस्य शक्रस्येयम्। इन्द्र शब्दात् तस्येदमि (पा०सू० ४।३।१२०) त्यण्। टिड्ढा ण ज्द्वयसज्जदघ्न ञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः इति ङीप् प्रत्ययः (पा०सू० ४।१।१५) अत्र कल्पद्रुमः (प्र० पृ० ३०१) शची। यथा मार्कण्डेयपुराणे (८८।२०)-

**व्रजहस्ता तथैवेन्द्री गजराजोपरि स्थिता।**

इन्द्रस्य यौगेश्वर्यशालिनो महादेवस्य पत्नी दुर्गा इति शब्दरत्नावली। अलक्ष्मी इति त्रिकाण्डशेषः, इन्द्र वारुणी इति रत्नमाला, पूर्वादिक् इत्यमरटीकायां रमानाथः। एला इति राजनिर्घण्टः। एलाची इति भाषा। यष्टयाव्हमैन्द्री नलिनानि दुर्वा इति सूत्रे तृतीयाध्याये चरकेनोक्तम्। एतत् सर्वम् कल्पद्रुमे निरुपितम्। एवमेवान्यकोशेषु।

**ओ—**शब्दोऽयमव्ययानव्यानेकार्थश्च। उ विच्। सम्बोधने आह्वाने स्मरणे चानुकम्पे इति मेदिनी। (१७९।९) वाचस्पत्ये (द्वि०पृ०१५५३) ब्रह्मण्य्प्ययं शब्दः। एवमेवान्यकोशेषु।

**ओम्—**शब्दोऽयमव्ययानव्ययानेकार्थकश्च। अवति रक्षतीति। अवते ष्टिलोपश्चेत्युणादिना (उ० १।१४१) मन् टिलोपश्च ज्वरत्वरे (पा०सू० ६।४।२०) त्यूठ ततो गुणः। अत्र वाचस्पत्यम् (द्वि०पृ० १५५८) प्रणवे आरम्भे स्वीकारे अनुमतौ अपाकृतौ स्वीकारे मङ्गले शुभे ज्ञेये ब्रह्मणि च। अश्च उश्च मृश्च तेषां समाहारः। विष्णुः महेश्वर ब्रह्मरूपत्वात् परमेश्वरे अव्य० यथा- तस्येश्वर वाचकता तथा पात० सूत्रभाष्य विवरणेषु दर्शितं यथा-

तस्य वाचकः प्रणवः सू०

वाच्य ईश्वरः प्रणवस्य किमस्य सङ्०केत कृतम् वाच्य वाचकत्वम्? अथ प्रदीप प्रकाशब्दवद्स्थितमिति। स्थितोऽस्य वाच्यस्यवाचकेन सह सम्बन्ध सङ्०केत स्त्वीश्वरस्य स्थितमेवार्थमभिनयति। यथावस्थितः पितापुत्रयोः सम्बन्धः, सङ्०केतेनावद्योत्यते। अयमस्यपिता अयमस्य पुत्र इति सर्गान्तरेष्वपि वाच्यवाचकवक्त्र पेक्षयस्तथैव सङ्०केतः क्रियते।

सम्प्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकमाह, तस्य वाचकः प्रणवः। व्याचष्टे वाच्य इति। तत्र परेषां मतं विमर्ष द्वारेणोपन्यस्यति, किमस्येति वाचकत्वम् प्रातिपदिकत्वमित्यर्थः परे हि पश्यन्ति यदि स्वाभाविकः शब्दार्थयोः सम्बन्धः सङ्०केतेनास्माच्छद्वादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्येत् ततो यत्र नास्ति स सम्बन्धस्तत्र सङ्०केत शतेनापि स व्यज्येत्, नहि प्रदीप व्यङ्०गयो घटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्योव्य ञ्जयितुम्। कृतसङ्०केतस्तु करभशब्दो वारणे वारणप्रतिपादको दृष्टः सङ्०केतकृतमेव वाचकत्वमिति विमृश्याभिमतमवधारयति, स्थितोऽस्येति अयमभिप्रायः सर्व एव शब्दा सर्वाकारार्थाभिधान समर्था इति स्थित एवैषा सर्वा कारार्थाभिधान इति स्थित एवैषां सर्वाकारैस्थैं स्वाभाविकः सम्बन्धः। ईश्वरसङ्०केतस्तु प्रकाशकश्च नियामकश्च, तस्येश्वर सङ्०केतःसेङ्०केतश्चास्य वाचकापभ्रंशविभागस्तदिदमाह-सङ्०केतस्तु ईश्वरस्येति। निदर्शनमाह यथेति। ननु शब्दस्य प्राधानिकस्य महाप्रलयसमये प्रधानभावमुपगतस्य व्यक्तिरपि प्रलीना ततो महदादिक्रमेणोत्पन्नस्य वाचकस्यैव माहेश्वरेण सङ्०केतेन न शक्या वाचकशक्तिरभिज्वलति विनष्टशक्तित्वादित्याह, सर्वान्तरेष्वपीति। यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दस्तथापि पुनराविर्भावे तच्छक्तियुक्त एव आविर्भवति वर्षातिपातसमधिगद् मृद्भाव् इवोद्विजोमेव विसृष्ट वारिधारा वसेकातेन पूर्वसम्बन्ध सङ्केतानुसारेण सङ्०केत क्रियते भगवता इति तस्मात् सम्प्रतितेः सदृशव्यवहार-परम्परयानित्यतयानित्यः शब्दार्थयोः सम्बन्धः न कूटस्थानित्य इत्यागामेन प्रतिजानेतु न

पुनरागमनिरपेक्षाः सर्गान्तरेष्वपि तादृश एव सङ्०केत इति प्रतिपक्षमीशते इति भावः। विव०।

तज्जपस्तदर्थभावनम् सू०

प्रणवस्यजपः प्रणवाभिधेयस्य भावनम् तदस्य योगिनः प्रणवंजपतः प्रणवार्थञ्च भावयतश्चित्तमेकाग्रं सम्पद्यते। तथोक्तम्-

**स्वाध्यायद्योगमासीत् योगात् स्वाध्यायमामनेत्।**
**स्वव्ध्याययोगसम्पत्या परमात्मा प्रकाशते।।** इति भा०।

वाचकमास्याय प्राणिधानमाह, तज्जपस्तदर्थभावनम् व्याचष्टे प्रणवस्येति। भावनं पुनः पुनः चेतसिनिवेशनम् । ततः किं सिद्धयति इत्यत आह प्रणवमिति। एकस्मिन भगवति आरमति चित्तम्। अत्रैव वैयासकी गाथामुदाहरयत, तथा चेति। ततः ईश्वरः समाधि तत् फलदानेन तमनुगृह्णाति। विव०।

ओङ्०कारस्यमाहात्म्यं स्वल्पादिकं ब्राह्मणस० दर्शितं यथा योगियाज्ञवल्क्यः

**प्रणवाद्याः स्मृतामन्त्राश्चतुवर्ग फल प्रदाः।**
**तस्मातवि निःसृता सर्वे प्रतीयन्ते च तत्र वै।।**
**मङ्०गल्यं पावनं धर्म्य सर्वकामप्रसाधनम्।**
**ओङ्०कारं परमं ब्रह्म सर्वमन्त्रेषु नायकम्।।**
**प्रजपते मुखोत्पन्नं तपः सिद्धस्यवै पुरा।**

स एव - **यथा वर्णपलाशस्य शङ्०केनैकेन धार्यते।**

**तथाजगदिदं सर्वमोङ्कारेणैव धार्यते।**
**जपेन दहते पापं प्राणायामस्तथा मलम्।**
**ध्यानेन जन्म निर्माणं धारणाभिस्तु मुच्यते।**

मनुः

**अकार श्चाप्युकारश्च मकार ञ्च प्रजापतिः।**
**वेदत्रयानुनिरदुहत् भूर्भुवः स्वरितीति च।।**

गीता -

**ॐ तत् सदिति निर्देशो ब्रह्मस्त्रिविधः स्मृतः।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिता पुरा।।**
**तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रिया।**
**प्रवर्तन्ते विधानोक्ता सततं ब्रह्मवादिनाम्।।**

योगियाज्ञ०-

सिद्धाना ञ्चैव सर्वेषां वेद वेदान्तयोस्तथा।
अन्येषामपि शास्त्राणां निष्ठाऽथोऽङ्०कार उच्यते।।
प्रणवधायतो वेदा प्रणवे पर्युपस्थिताः।
वाङ्०मयं प्रणवः सर्व तस्मात्प्रणवमभ्यसेत्।।

तथा स एव-

आद्य यत्राक्षरं ब्रह्म त्रयो मंत्र प्रतिष्ठिता।
स गुह्योऽन्यास्त्रिवृद्वेदो यो वेदैनं स वेदवित्।।
एक एव तु विज्ञेयः प्रणवो योग साधनम्।
गृहीतं सर्वसिद्धान्तैः इतरैः ब्रह्मवादिभिः।।
वेदभारभरातौ यः सर्वे ब्राह्मण गर्दभ।
यो वेत्ति ब्रह्म गोप्यन्तं त्रिमात्रार्द्धेषु तिष्ठति।।

तथा -

त्रिमात्रार्थं परं ब्रह्म मात्राक्षरविवर्जितम्।
अचिन्त्यमव्ययं सूक्ष्मं निश्चलं परमं पदम्।।

मनुः -

क्षरन्ति सर्ववैदिक्यो जुहोति यजति क्रियाः।
त्र्यक्षरं दुष्करं ज्ञेयं ब्रह्म चैव प्रजापतिः।।

योगियाज्ञ०-

यथामृतेन तृप्तस्य पयसा किं प्रयोजनम्।
तथोङ्०कार विधिज्ञस्य ज्ञानतृप्तिं न विद्यते।।
सर्वमन्त्र प्रयोगेषु ओमित्यादौ प्रयुज्यते।
तेन सम्परिपूर्णानि यथोक्तानि भवन्ति हि।।
यन्यूनमतिरिक्त ञ्च यच्छिद्रं यदयज्ञियम्।
पदमेध्यमशुद्ध ञ्च यातायामञ्च यद् भवेत्।।
तत्रदोङ्०कार युक्तेन मन्त्रेणाविकलं भवेत्।

छन्दोगगृह्यपरिशष्टिम् -

यदोङ्कारमकृत्वा तु किञ्चिदारभ्यते, तद् वज्रम्भवति। तस्मात् वज्रभयाद्भीत ओङ्०कारं पूर्वमारभेत्।

गद्यव्यास: ओङ्०कारं स्वर्गकारं तस्मात् सर्वेष्वेवकर्मस्वादौ प्रयुञ्जीत।

छन्दोगपरिशिष्टम् -

ओङ्०कारपूर्व हि योगोपासनं यानि नित्यानि पुण्यतमानि कर्माणि दान यज्ञतप: स्वाध्याय जप ध्यान सन्ध्योपासन प्राणायाम होम देव पितृमन्त्रोच्चारण ब्रह्मारम्भादि यच्चान्यत् किञ्चित् सर्वं प्रणवमुच्चार्यप्रवर्तयेत् समापयेच्च।

मनु:–

**प्राक्कूले पर्युपासीनः पवित्रैश्चैव पावितः।**
**प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति।।**

व्यास: -

**प्रणवस्य ऋषिः ब्रह्मा गायत्री च्छन्द एव च।**
**देवोऽग्निः सर्वकार्येषु विनियोगः प्रकीर्तितः।।**

तथा -

**एवमार्षादिकं स्मृत्वा तत ओङ्०कारमभ्यसेत्।**
**सार्ध त्रिमात्रमुच्चार्य दीर्घघण्टा निनादवत्।।**

योगि याज्ञवल्क्य: -

**त्रिमात्रस्तु प्रयोक्तव्यः सर्वारम्भेषु कर्मषु।**
**तिस्रः सार्द्धास्तु कर्तव्यमात्रास्तत्रार्थ चिन्तकैः।।**
**देवताध्यानकाले तु प्लुतं कुर्यान्न संशयः।**
**तैल धारावदच्छिन् दीर्घघण्टानिनादवत्।।**
**अप्लुतं प्रणवस्यान्तं यस्तं वेद स वेदवित्।**
**आद्यं तत्राक्षरं ब्रह्म त्रयोयत्र प्रतिष्ठिता।।**
**स गुह्योऽन्यस्त्रिवृद वेदो यो वेदैनं स वेदवित्।**

छन्दोगपरिशिष्टम् -

स्वरितोदात एकाक्षर ऋग्वेदे। त्रैस्यर्योवत्ति ओङ्०कारो यजुर्वेदे। दीर्घो दात्त एकाक्षर: सामवेदे। संक्षिप्तोदात्त एकाक्षर ओङ्०कार अथर्ववेदे। बौधायन:- अपि वा प्रणयेन त्रिरत्नर्जले पठन् सर्वस्मात् पापात् प्रमुच्यते।

वृहद्यम: -

**स्वदेहमरणिं कृत्वा प्रणव श्चोत्तरारणिम्।**
**ध्यानर्निर्मथानाद्विष्णुं पश्येदग्निनिगूढवत्।।**

गीता–

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम्।।**

ओङ्०कारस्य मात्रा विशेषामिध्यानफलं प्रश्नोपनिर्णीतम् - यथा-

एतद् वै सत्यकाम! परञ्चापारञ्चब्रह्म यदोङ्०कारस्तस्माद् विद्वान्, ते नैवायतने-नैकतरमन्वेति। स यद्येक मात्रमभिध्यायीत् स तेनैव संमेदितस्तूर्णमेव, जगत्यामभिम्पद्यते। तमृचोमनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येन श्रद्धया सम्पन्नो महिमानमनुभवति। अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुषमुन्नीयते। सोमलोकमलोक स सोमलोके विभूतिमनुभूय पुनरावर्तते। यः पुनरेतन्त्रिमात्रेणोवोमित्येनैवाक्षारेण परं पुरुषमधिध्या यीत स तेजसि सूर्ये सम्पन्नः। यथा पादोदरस्तथा विर्निमुच्यत एव ह वै स पाप्मना विनिर्मुक्तः स सामभिरून्नीयते। ब्रह्मलोकं स एतस्माज्जीवधनात्परात्परं पुरिशयं पुरुषभीक्षते, तदेतौलोकौ भवतः-

**तिस्त्रोमात्रामृत्यमत्यः प्रयुक्ता अन्योन्यसक्ता अनीविप्रयुक्ताः।**
**क्रियासुवाह्यान्तरमध्यमासुसम्यक् प्रयुक्तस्तु न कम्पते ज्ञः।।**

ऋग्भिरेतं, यजुर्भिरन्तरिक्षम्, स सामभिर्यत्त्कवयोसजरममृतमयं पुरञ्चेति।

एतद् ब्रह्मवै परञ्चापरञ्च ब्रह्मपरं सत्यमक्षर पुरुषाख्य मपरञ्च प्राणाख्यं प्रथमजं यत्तदोङ्०कार एवोङ०कारात्मकमोङ्०कार प्रतीकत्वात्। परं हि ब्रह्म शब्दादि उपलक्षणार्हं सर्वधर्मविशेषवर्जिततमतो नशयक्मतीन्द्रिय गोचरत्वात् केवलेन मनसावगाहितुमोङ्०कारेतु विष्ण्वादि प्रतिमास्थानीये भक्त्यावेशित ब्रह्मभावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते। शास्त्रप्रामाण्यात्। तथापरञ्च ब्रह्म। तस्मात् परञ्चापरञ्चब्रह्म यदोङ्०कार इत्युपचर्यते। तस्मादेवं विद्वानेतेनैवात्म प्राप्तिसाधनेन ओङ्०कारभिध्याननैकतरम् परम्परमन्वेति ब्रह्मानुगच्छति नेदिष्ठं ह्यालम्बनमोङ्०कारो ब्रह्मणः। सय द्यप्योकारस्य सकलमात्राविभागज्ञो न भवति तथाप्योङ्०काराभिध्यानप्रभावद् विशिष्टामेबगतिं गच्छति किन्तार्हि यथे प्येवमोङ्०कारमेकमात्राविभागज्ञः एव केवलोऽभिध्यायीतैकमात्रं सदा ध्यायीत सतेनैव मात्रावशिष्टोङ्०काराभिध्यानेनैव संवेदितः। सम्बोधितस्तूर्ण क्षिप्रमेव जगत्यां पृथिव्यामभिसम्पद्यते किं मनुष्यलोकमनेकानि जन्मानि जगत्यां तत्र तं पाठकम्, जगत्यां मनुष्यलोकमेवोपनयन्ते उपनिगमयन्ति ऋचः ऋग्वेद रूपा ओंकारस्य प्रथमा एका मात्रा। तदभिध्यायेन स मनुष्य जन्मनि द्विजाग्रयः सन् तपसा ब्रह्मचर्येण श्रद्धया च सम्पन्नो महिमानं विभूति मनुभवति, न वीतश्रद्धो यथेष्टचेष्टो भवति योगभ्रष्टः कदाचिदपिन दुर्गतिं गच्छति। अथ पुनर्यदि

द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोङ्कार मभिध्यायीत् स्वप्नात्मके मनसि मननीये यजुर्मये सोमदैवत्ये सम्पद्यते एकाग्रतयात्मभावं गच्छति स एवं सम्पन्नो मृतोऽन्तरिक्षाधारं द्वितीय रूपं द्वितीयमात्रारूपैरेव यजुभिरुन्नीयते सोमलोकं सौम्यं जन्म प्रापयन्ति तं यजूंषि इत्यर्थः। स तत्र विभूतिमनुभूय सोमलोके मनुष्यलोक प्रतिपुनरावर्तते। यः पुनरेतमोङ्०कारं त्रिमात्रेण त्रिमात्राविषयविज्ञानविशिष्टेनोमित्येतेनैवाक्षरेण प्रतीकेन परं सूर्यान्तर गतं पुरुषमभिध्यायीत। तेनाभिध्यायेन प्रतीकत्वेन त्वालम्बनत्वम्, यत् कृतमोङ्०कारस्य पर ञ्चापर ञ्च ब्रह्मेति, भेदाभेद श्रुतेरोङ्०कारमिति च। द्वितीयानेकशः श्रुतावध्येत अन्यथा यद्यपि तृतीयाभिधानत्वे करणत्वमुपपद्यते तथापि प्रकृतानुरोधन्त्रिमात्रं परं पुरुषमिति द्वितीयेव परिणम्या। त्यजेदेकं कुलस्यार्थे इति न्यायेन। स तृतीयोमात्रारूपस्तेजसि सूर्ये सम्पन्नो भवति ध्यायमानोभूतोऽपि सूर्या त्सोमलोकदिवन्पुरावर्तते किन्तु सूर्यसम्पन्नमात्र एव। यथा- पादोदरः सर्पस्त्वचा विनिर्मुच्यते। जीर्णत्वग्विनिर्मुक्तः स पुनर्नवो भवति। एवं ह वै एष यथा दृष्टान्तः स पाप्मना सर्पत्वकस्थानीयेनाशुद्धिरुपेण विनिर्मुक्तः सामभिस्तृतीयामात्रारूपैरुर्द्धमुन्नीयते। ब्रह्मलोकं हिरण्यगर्भस्य ब्रह्मणोलोक सत्याख्यम्। स हिरण्यगर्भः सर्वेषां संसारिणां जीवानामत्मभूतः स ह्यन्तरात्मा लिङ्०गरूपेण सर्वभूतानां तस्मिल्लिङ्०गात्मनि संहता सर्वे जीवाः। तस्मात् सजीवधनः स विद्वांसस्त्रिमात्रोङ्०काराभिज्ञः। एतस्माज्जीवघनात् हिरण्यगर्भात् परात्परं परमात्माख्यं पुरुषमीक्षते। पुरिशयं सर्वशरीरानुप्रविष्टं पश्यति ध्यायमानः। तदेतावस्मिन् यथोक्तार्थ प्रकाशकौ मन्त्रौ भवतः। तिस्त्रस्त्रिसंख्याका अकारोकारमकराख्या ओङ्०कारस्य मात्राः। मृर्त्युयासांविद्यते ता मृत्युमत्यः मृत्युगोचरादतिक्रता मृत्यगोचरा एवेत्यर्थः। ता आत्मनो ध्यानक्रियासुप्रयुक्ताः। किञ्चान्योऽन्यसक्ता इतरेतर सम्बद्धाः। अनविप्रयुक्ता विशेषेणैकैक विषय एव प्रयुक्ताः। तथा न विप्रयुक्ता अविप्रयुक्ता नाविप्रयुक्ता अनविप्रयुक्ता किन्नहि विशेषैकस्मिञ्ज्ञानकालेऽतिसृष्टासु क्रियासुबाह्याभ्यन्तरमध्यमासु जागृत् स्वप्नसुषुप्ति स्थान पुरुषाभिध्यानलक्षणाषु योगक्रियासु सम्यक्प्रयुक्तासु सम्यक् ध्यानकाले प्रयोजितासुन कम्पूयते न चलित ज्ञः ज्ञो योगी यथोक्त विभागज्ञ ओङ्०कारस्येत्यर्थः तस्यैवं विदश्चलममुपद्यते। यस्माज्जाग्रत् स्वप्नसुषुप्तपुरुषाः सह स्थानैमात्रा त्रयरुपेणो ङ्०कारात्मरूपेण दृष्टाः। स ह्येवं विद्वान् सर्वात्मभूतओङ्०कारमयः कुतो वा चलेत् कस्मिन्वा। सर्वार्थ संग्रहार्थो द्वितीयो मन्त्रः। ऋग्भरैतं लोकमनुष्योपलक्षितम्। यजुभिरन्तरिक्षं सोमाधिष्ठितम्। सामभिर्यत् ब्रह्मलोक तृतीय कवयो मेधाविनो विद्यावन्त एव नाविद्वान्सो वेदयन्ते। त्रिविधलोकमोङ्०कारेण साधनेनापरब्रह्म लक्षणमन्वेतानुगच्छति विद्वान्। तेनैवोङ्०कारेण एतद् परब्रह्माक्षरं सत्यम् पुरुषाख्यं शान्तं विभुकं जाग्रत् स्वप्नसुषुप्तादि विशेषसर्रप्रपञ्चविवर्जितमत एवाजरं जरावर्जितमृत मृत्युवर्जितमेव। यस्माज्जराविक्रियादिरहितमतोभयम्। यस्मादेवाभयं तस्मात्परं निरतिशयम्। तदप्योङ्०कारेणायतेन गमनसाधनेनान्वेतीत्यर्थः। भाष्य०।

स च सामावयवभेदः ब्रह्मवाचकः आत्मबोधकाक्षरुपश्चतदेवत। छा०उ० भाष्ययोर्दर्शित यथा।

ओमित्येदक्षारमुदगीथमुपासीत्। छा०उ० ओमित्येतदक्षरमुपासीत्। ओमित्येतदक्षरम्। परमात्मनोऽभिधानं नेदिष्ठम् तस्मिन् हि प्रयुज्यमाने स प्रसीदति प्रियनामग्रहण इव लोकः। तदिहेति पर प्रयुक्तमभिधायकत्वाद् व्यावर्तितम्। शब्दस्वरुपमात्रे प्रतीयते तथा चार्चादिवत् परस्यात्मन प्रतीकं सम्पद्यते।

एवं नामत्वेन प्रतीकत्वेन च परमात्मोपासनसाधन श्रेष्ठमिति सर्ववेदान्तेष्वगतम्। जपकर्मस्वाध्यायाद्यन्तेषु बहुशः प्रयोगात् प्रसिद्धमस्येश्रैष्ठ्यम्। अतस्तेदक्षरं वर्णात्मकमुद्गीथ भक्त्यवयवत्वादुद्गीथ शब्दवाच्यमुपासीत्। कर्माङ्०गावयवभूते ओङ्०कारेपरमात्प्रतीके दृढामेकाग्रलक्षणां मति सन्तनुयात्। भाष्य०।

ओमित्युद्गायति तस्योपव्याख्यानम्। एषा भूतानां पृथिवी रसः पृथिव्या आपो रसः। अपामोषधयो रसः। ओषधीना पुरुषो रसः पुरुषस्यवाग्रसो वाच ऋग्रसः ऋचः सामरसः साम्न उदगीथो रसः। स एष रसानां रसतमः परमः परार्द्धोऽष्टमोयदुद्गीथः। कतमा कतमर्क कतमत् कत्मत्सास कतमः कतम उद्गीथ इति। विमुष्टं भवति। वागेवर्क प्राणः साम,ओमित्येतदक्षर मुदगीथः. तद्वा एतन्मिथनं यद् वाक् च प्राणश्चर्क च साम च। तदेतन्मिथुनमित्तस्मिन्नक्षरे संसृज्यते। यदावै मिथुनौ समागच्छत् आपमतो वै तावन्योऽन्यस्य कामम्। आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपासते तद्वाएतदनुत्ताक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाह एषो समृद्धियदनुज्ञा,समर्द्धयिता ह वै कामानां भवति। य एतदेवं विद्वानक्षरमुद्गीथ मुपासते। तेनेयं त्रयी विद्यावर्तते। ओमित्याश्रावत्योमिति शंसत्योमित्युदगीयत्येतस्यै वाक्षरस्यापचित्यै महिम्ना रसेन। उपनि०।

स्वयमेव श्रुतिरोङ्०कारस्योद्गीथ शब्दवाच्यत्वे हेतुमाह ओमिति ह्युद्गायति। ओमित्यारभ्य हि यस्मादुद्गायति अत्र उद्गीथ ओङ्०कार इत्यर्थः। तस्याक्षरस्योपव्याख्यानमेव मुपासनामेवं विभूत्येवं फलमित्यादि कथनमुपव्याख्यानम्। प्रवर्तत इति वाक्यशेषः। एषां चरा चरणां भूतानां पृथिवी रसोमतिः परायणवष्टम्भः। पृथिव्या आपो रसोऽप्सु ह्योता प्रोता च पृथिव्यतस्तारसः पृथिव्याः। अपामोषधयो रसोपरिणामत्वादोषधीनाम्। तासां पुरुषो रसोऽन्नोपरिपरिणामत्वात् पुरुषस्य। तत्रापि पुरुषस्य वाग्रसः। पुरुषावयवानां हि वाक्सारिष्ठा। अतो वाक् पुरुषस्य रस उच्यते तस्यापि वाचः रसः सारतराः। ऋचः सामरसः सारतरम्। तस्यापि साम्न उद्गीथः। प्रकृतत्वादोङ्०कारः सारतारः। एवंस एष उद्गीथाख्य ओङ्०कारो भू आदीनामुत्तरोत्तर रसानामतिशयेन रसो रसतमः परमात्मा प्रतीकत्वात् परार्द्धः अर्द्ध स्थानं परञ्च तदर्थश्च तदर्हतीति परार्द्धः परमात्मस्थानार्हः परमात्मवदुपास्यत्वादित्यभिप्रायः।

अष्टमः पृथिव्यादिरस संख्यायां यदुद्गीथः य उद्गीथः। वाच ऋग्रस इत्युक्तम् कतमा सा ऋ कतमद्धत्साम कतमो वा स उद्गीथः। कतमा, कतमेति वीप्सादरर्था। ननु बहूनां जाति परिप्रश्ने (पा०सू० ५।३।९३) डतमच्। न हयत्र ऋक्जातिबहुत्वं कथं डतमच् प्रत्ययः। नैष दोषः- जातौ परिप्रश्नो जाति परिप्रश्न इत्यत्रास्मिन् विग्रहे जातावृग्व्यक्तीनां बहुत्वोपपत्तेः न तु जातेः परिप्रश्न इति विगृहयते। ननु जाते, परिप्रश्न इत्यस्मिन् विग्रहे कतमः कठ इत्युदाहरणमुपपन्नम् जातौ परिप्रश्न इत्यत्र तु न युज्यते। तत्रापि कठादि जातावेव व्यक्तिबहुत्वाभिप्रायेण परिप्रश्न इत्यदोषः। यदि जातेः परिप्रश्न स्यात् कतमा कतमा ऋगित्यादौ उपसंख्यान कर्तव्य स्यात्। विमृष्टं भवति विमर्श कृतो भवति। विमर्शे हि कृते सति प्रतिवचनोक्तिरुपपन्ना वागेवर्क प्राणः साम्येति। वागृचो रेकत्वेऽपि नाष्टमत्वव्याघातः पूर्वस्मात् वाक्यान्तरत्वाद् आप्तिगुणसिद्धये ओमित्येत्यतदक्षर-मुद्गीथ इति वाक् प्राणवृक् साम योनि व इति वागेवर्क प्राणः सामेत्युच्यते। यथा क्रम ऋक् सामर्योन्योवाक् प्राणर्योग्रहणे हि सर्वासां ऋचां सर्वेषाञ्च साम्नामवरोधः कृतः स्यात्। सर्वक्र सामबरोधे चर्क सामसाध्यानाञ्च सर्वकर्मनामवरोधः कृतः। स्यात्। तदवरोधे च सर्वे कामाः अवरुद्धाः स्यु। ओमित्येतदक्षर उद्गीथ भक्त्याशंका निवर्त्यते। तद्वैवतदिति मिथुनं निर्दिश्यते किन्तन्मिुथनमित्याह, यत्वाक् च प्राण श्च सर्वर्क् सामकरणभूतौ मिथुनं ऋक् च सामचेति ऋक्सामकारणौ ऋक्सामशब्दोक्ताविर्त्यर्थः। न तु स्वतन्त्रमृक् च साम च मिथुनम् अन्यथा हि वाक्प्राणश्चेत्यकमिथुनमृकसाम चापरं मिथुनमिति द्वे मिथुने स्यातां तथा च तदेतन्मिथुनमित्येक वचननिर्देशऽनुपपन्नः स्यात्। तस्मादर्क सामयोन्योर्वाक्प्राणयोरेव मिथुनत्वम्। तदेतदेवं लक्षणं मिथुनमित्येतस्मिन्नदारे संसृत्यते। एवं सर्वकामावाप्तिगुणविशष्टं मिथुनमोङ्०कारे संसृष्टं विद्यते इति ओङ्०कारस्य सर्वं कामावाप्तिगुणवत्वं प्रसिद्धम्। मिथुनस्य कामापयितृत्वं प्रसिद्धमिति दृष्टान्त उच्यते यथा- लोके मिथुना मिथुनावयवौ स्त्रीपुमान्सो यत् समागच्छतो ग्राम्यधर्मतया संयुज्येयाताम् तदापयतः प्रापयतोऽन्योन्यस्येतरेतस्य तौ कामं। तथा च स्वात्मानुपविष्टेन मिथुनेन सर्वकामाप्तिगुणवत्वमोङ्०कारस्य सिद्धमित्यभिप्रायः। तदुपासकोऽप्युर्द्गीता तद्धर्मा भवतीत्याह आपयिताह वै कामनां यजमानस्य भवति या एतदृक्षरमेवाप्ति गुणवदुद्गीथमुपास्ते तस्यैतदयोथोक्तम् फलमित्यर्थः। तं यथा यथोपास्ते तदेव भवति इति श्रुतेः। समृद्धिमांश्चोङ्०कारः कथं तद्वा एतद् प्रकृतमनुज्ञाक्षरमनुजा च साक्षरञ्च तदनुज्ञानमतेरोङ्०कार इत्यर्थः। कथमनुज्ञेत्यय आह श्रुतिरेव। यद्धि किञ्च् यत् किञ्च लोके ज्ञानं धनं वानु जानाति विद्वान् धनो वा तत्रानुमतिं कुर्वन्नोमित्थव तदाह तथा च वेदे यत्र देवास्त्रयस्त्रिशदित्योमितिहोवाचेत्यादि। तथा च लोकोऽपि तवेदं धनं गृहणामि इत्युक्त ओम् इत्याह। अत एषा एषैव समृद्धिर्यदनुज्ञा या अनुज्ञा समृद्धिस्तन्मूलत्वादनुज्ञायाः

समृद्धोऽप्योमिति अनुज्ञा ददाति। तस्मात्समृद्धि गुणवानौ ङ्०कार इत्यर्थः। समृद्धिः गुणोपासकत्वाद्धर्मासम्नर्द्धयिता स वै कामानां यजमानस्य भवति एतदेवं विद्वानक्षारनुद्गीथ उपास्त इत्यादि पूर्ववत्। अथैदानीमक्षरं स्तौति उपास्यत्वात् प्ररोचनार्थम्। कथं तेनाक्षरेण प्रकृतेन इयं ऋग्वेदादि लक्षणा त्रयीविद्याविहितं कर्मेर्त्थः। न हि विद्यैवैश्रावणादिभि वर्तते कर्म तु तथा प्रवर्तत इति प्रसिद्धम्। कथमित्याश्रावयत्योमिति संशत्योमित्युदगायति इति लिङ्०गाच्च सोमयाग इति गम्यते तच्च कर्म एतस्यैवाक्षरस्या-पचित्यै पूजार्थम्। परमात्म प्रतीकं हि तत्। तदपचितिः परमात्मन एव सा। स्व कर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः इति स्मृतेश्च। महिम्ना रसेन किञ्चैतस्येवाक्षरस्य महिम्ना महत्वेन ऋत्विग्यजमानादि प्राणैरित्यर्थः। भाष्य०।

ओम् शब्दस्य मङ्०गलन्तु नार्थः किन्तु मङ्०गल साधनत्वम् श्रवणेन भवति मङ्०गलम् इत्येवमर्थमभिसमवाय तदुत्कीर्त्तनम् अथ शब्दवत्। अत एव-

**ओङ्०कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा।**
**कण्ठं भित्वा विनिर्यातौ तेन माङ्०लिकावुभौ।।**

इत्यत्र ओङ्०कारस्य माङ्०गलिकत्वमुक्तम् तथा चार्थान्तरे प्रयुक्तावथौङ्०कार शब्दौ श्रुत्यामिभप्रेतार्थ सिद्धिरुपमङ्ग जनयतः इत्याकरे दृश्यम् । श्रवणात् ओम्शब्दस्यादेः पररुपैकादेशः। ओम् + कृ + घ ञ् । ओमित्यस्य करणे ओङ्०कार क्त ओङ्०कृत अङ्०गीकृते। ओमित्यादावुचारयुक्ते च त्रि०। एतत् सर्वं वाचस्पत्ये निरुपितमस्ति।

**ओष्ठम्–**उष्यते ऊष्णाहारेण। उष् दाहे धातोः उसकुषी (उ० २।४) ति थ् प्रत्ययः। दन्ताच्छादकावयवः। यथामरः (२।६।९०) ओष्ठाधरौ रदनच्छदौ दशनवाससी इति। कल्पद्रुमे (प्र० पृ० ३०४) यथा- दन्तवासः दन्तवस्त्रं, रदनच्छदः इति राजनिर्घण्टः। तस्य द्विवचने ओष्ठौ ओष्ठाधराविति यावत्। यथा ऋग्वेदे (२।२९।६) ओष्ठाविवमध्वास्न्ने वदनतस्तनाविव पिप्यतं जीवसे नः। तथा मनुः (८।२८२) -

**अपनिष्ठीव्रतो दर्पादद्वारोष्ठो च्छेदयेन्नृपः**

तथाकुमारे (३।६७)–

**उमामुखे विम्फलधरोष्ठे।**
**व्यापारयामास विलोचनानि।।**

**औ–**शब्दोऽयव्यमनव्ययानेकार्थश्च। आङु०पसर्गात् अवधातोः क्विृ प्रत्ययः ऊठ् च। अत्र वाचस्पत्यम् (द्वि० पृ० १५६६) आह्वाने सम्बोधने। विरोधे निर्णये शब्दरत्ना०। अनन्ते पु० एकाक्षरकोषः। निःस्वने तुः। पृथिव्या स्त्री मे०।

**स च चतुर्दश स्वरो योऽसौ सेतुरौकार संज्ञितः।**
**सा चानुस्वारनादाभ्यां शूद्राणां सेतुरुच्यते।।**

इति तन्त्रसारधूत कालिकापु० उक्तेः शूद्राणां जपमन्त्रभेदः। एवमेव कल्पद्रमादिषु (प्र०पृ० ३०४)

**औडुलोमिः**—उडुलोम्नोऽपत्यं वह्वादित्वादि (पा०सू० ४।१।४५) ञ्। एवमेव वाचस्पत्यादिषु। (द्वि० पृ० १५६७)

**औत्सी**—उत्सः वारिप्रस्त्रवनम् ऋषिविशेषः वा तस्यापत्यमित्यर्थे उत्सादित्वादञ् डीप्। (पा०सू० ४।१।१५) प्रसवन भवे स्त्रियां डीप् इति वाचस्पत्यम्। (द्वि०पृ० १५७१)

**औदमेयी**—उदमेयस्यापत्यमतइञ्। (पा०सू०४।१) औदमेय शब्दात् डीष्। एवमेववाचस्पत्येऽपि।

**औपगवी**—उपगोरपत्यं स्त्री। अपत्यर्थे अण् प्रत्ययः। ततः जातेरस्त्रीविषयादोपधादिति डीष्। अत्र वाचस्पत्यम् औपगवः शब्दे यथा- उपगतो गौरस्य उपगुर्गोपः तस्यापत्यम्। गोपालकपुत्रे तद्याजिपुत्रे च लक्षणया उपगुशब्दस्तद् याचि विप्रोऽपि उपगुशब्देन उच्यते।

**यं वर्णं याजयेद् यस्तु सतदवर्णमाप्नुयात्।**
**सद्यो वर्षेणवर्षश्चेत्येवमेवाब्रवीद् भृगुः।।**

इति हारीतोक्तेः। तत्सम्बन्धिनि लक्षणे अङ्०के सङ्घे च तस्यापत्ये तु स्त्रियां डीष् इति। प्रायएव मेवान्यकोशेषु।



# द्वितीयोऽध्यायः

**कच्चित**–अव्य०। काम्यते। कम्-विच् चीयते निश्चीयते यस्मात् कम् - चि -क्विप् पृषोदरादित्वात् मस्य दः। स्वाभिलषित ज्ञापनाय कृते काम प्रवेदन रूपे प्रश्ने हर्षे मङ्०गले च इति वाचस्पत्यम्। (पृ० १५७३) अमरेऽपि (३।४।१४) एवमेव यथा = कच्चित् कामप्रवेदने एवमेवकल्पद्रुमादिषु। (द्वि० पृ० ६)

**कटप्रूः**–कटे श्मशाने प्रवते। कटं कटेन वा प्रवते। प्रूङ्० गतौ धातोः निपातनात् दीर्घः। किव्वचिप्रच्छिश्रि (उ- २।५७) स्रु द्रु प्रु ज्वां दीर्घो सम्प्रसारणञ्च। अत्र मेदिनीकारः। (१३२।१३१)

कटप्रुः पुंसि राक्षसे। विद्याधरे महादेवे तथा स्यादक्षदेवने इति कल्पद्रुमः। (द्वि०पृ०९) वाचस्पत्ये (तृ०पृ०१६१९) यथा महादेवः तस्य श्मशान वासित्वात् तथात्वम्। राक्षसे विद्याधरे च तयोः श्मशान वासित्वात् प्रेतवाहनत्वाच तथात्वम्। कटेन देवसाधन द्रव्येण प्रवते अक्षदेवने त्रि०। कटात् समवायात् आचारात् तमतिक्रम्य प्रवते कामचारिणे त्रि०। कटं नलव्रणं प्रवते कीटभेदे च उज्ज्वलदत्तः प्राय एवमेवान्यकोशेषु।

**कठी**–कठेन प्रोक्तमधीते या शाखा। अध्येतृवाचि त्वेन जातित्वात् (पा०सू० ४।१।६३) डीष्। कठ प्रोक्त मधीयानेत्यर्थः। अत्र कल्पद्रुमः (द्वि० पृ० १२) ब्राह्मणी इति जटाधरः। एवमेव वाचस्पत्यादिषु (तृ० पृ० १६२५) च।

**कति**–कासंख्या किं परिमाणं एषाम् किमः (पा०सू० ५।२।४०) संख्या परिमाणे डति इति डति प्रत्यय। अत्र कल्पद्रुमः (शब्द० द्वि० पृ० १७) कियत् परिमाणमिति। यथा अथर्ववेदे (१०।२।४) - कति देवाः कतीमेत आसन् या उरोगीवाश्चिक्युः पुरुषस्य कतिस्ततनौ व्यदधुः कः क फोडौ कति स्कन्धान् कति पृष्टीरचिन्वन् पु० विश्वामित्र पुत्राणामेकतमः। यद् वंशोद्भूत सूत्रकृत-कात्यायनर्षिः। प्रायः एवमेवान्यकोशेषु।

**कद्रुः**–कन्दति कदि आह्वानेरोदने च धातोः मृगय्वादित्वात् (उ० १।३७) साधुः। कद्रु शब्दात् स्त्रियां संज्ञायामि (पा०सू० ४।७२) ति सूत्रेण ऊङ्० प्रत्ययः। कद्रूसर्पाणां नागानां माता संज्ञाविशेषे एव ऊङ्० नान्यत्र। कद्रु शब्दस्य व्याख्या यथा मेदिन्याम्। (१२३।१२)।

**कद्रुस्त्रिषु स्वर्णपिङ्० गो नागानाम्मातरिस्त्रियाम्।**

अमरे यथा (१।६।१६) - कडारः कपिलः पिङ्॰गपिशङ्॰गौ कद्रुपिङ्॰गलौ। यथा रामायणे (२।२०।२९)

**रोहिण्यां जज्ञिरे गावो गन्धर्व्या वाजिनस्तथा।**
**सुरसाजनयन्नागान् राम! कद्रुश्च पन्नगान्।।**

वाचस्पत्ये (तृ०पृ० १६४२) नागमातरि दक्षप्रजापतेः कन्याभेदरूपे कश्यपपत्नी भेदे च। प्रायएवमवान्यकोशेषु।

**कनिष्ठा**–अतिशयेन युवा अल्पोऽवा अतिशायने तमविष्ठनौ इतीष्ठनि (पा०सू० ६।३।५५) युवाल्पयोः (पा०सू० ४।१।५) कनन्यतरस्यमिति कनादेशेषु स्त्रियां टाप्। अत्र वाचस्पत्यम् (तृ०पृ० १६४५) (यजुर्वेद १६।३२) त्रि० अतितरुणे अत्यल्पे अनुजे पु० स्त्री०। दुर्वलाङ्॰गुलौ अल्पाङ्॰गलौ स्त्री०। कनिष्ठस्य भार्यायाम्- अल्पवयस्कायां स्त्रियां स्त्री०। तत्र पुंयोगलक्षणं ङीषं वयोवाचिङीषं च बाधित्वा अजादि पाठाट्टाप्। नायिकाभेदे सा च रसमंजर्या धीराधीराधीराधीर भेदेन त्रिविधेति विभज्य परिणीतत्वे सतित भर्तृन्यूनस्नेहा कनिष्ठेति लक्षयित्वा धीराधीरादिज्येष्ठ कनिष्ठयोरुदाहरणमुक्तम्, तत्र धीरेजेष्ठा कनिष्ठे यथा-

**एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्रार्तयोः।**
**एकां पल्लिवतावगुण्ठनवतीमुत्कन्धरीं दृष्टवान्।।**
**अन्यस्याः सविधं समेत्य निभृतं व्यालोलहस्ताङ्॰गुलिः।**
**व्यापारैः वसना ञ्चलं चपलयन् स्वापच्युतं क्लृप्तवान्।।**

अधीरे ज्येष्ठाकनिष्ठे यथा-

**धैर्याधैर्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये,**
**रत्नद्वद्वमनत्तकान्तिरुचिरं मुष्टिद्वये न्यस्तवान्,**
**एकस्याः कलयन् करे प्रथमयोरत्रं परस्या प्रियो**
**हस्ताहस्तिनिषात् स्पृश्न कुचतटीमानन्दमाविन्दति।।**

अत्यल्पपरिमिते त्रि०। उत्तरकालजाते। त्रि०। अधः पदे अधरे च त्रि०। परजातमात्रे। महादेवे पु०। नमो ज्येष्ठाय च कनिष्ठाय च। इति यजुर्वेद।(१६।३२) प्राय एवमेवान्यकोशेषु।

**कपिला**–फिट्स्वरेणान्तोदातात् न ङीष्। कपिलोवर्ण अस्त्यस्याः अर्शाद्यच्(पा०सू० ५।२।१२७) प्रत्ययः। अत्रामरः (२।४।२०)

अथ द्विजा, हरेणू रेणुका कौन्बी कपिला भस्मगन्धिनी इति। मेदिन्या (१४९।६६-६७) यथा-कपिला रेणुकायाञ्च शिंशपांगो विशेषयोः। पुण्डरीककरण्यां स्त्री वर्णभेदे त्रिलिङ्०गकम्। नानले वासुदेवे च मुनिभेदे च कुक्कुरे इति। अमरे (१।३।४) अन्यच्च यथा- दिग्गजानां करिण्यो भ्रमु कपिला पिङ्०गलानुपमाः क्रमात्। ताम्रकर्णी शुभ्रदन्ती चाङ्०गना चाञ्जनावती इति। एवमेव शब्दकल्पद्रुमादिषु। (द्वि० पृ० २४)

**कबरी**–कवरशब्दात् केशानां सन्निवेशश्चेत् तदा ङीष् (अमर ३।३।२५०) अन्यथा कबरैव। केशालङ्कारः।

**कम्**–अ०य०। कमु कान्तौ धातो णिङ्०मात्रे णिच्। तथाचामरः (३।३।२५०) कं वारिणि च मूर्द्धनि विश्वकोषेऽपि (१८९।४६) यथा कम् शिरः सुखादिषु। मेदिन्यां (१८३।५२) यथा- कं पादपूरणे तोये मस्तके च सुखेऽपि च एवमेवाचस्पत्ये (पृ०१६८०) कल्पद्रुमे (तृ०२७) च।

**करभूः**–करात् करे वा भवतीति करभूः। नखः।

**करभोरुः**–करभाविव ऊरू यस्या इति। ऊरुत्तरपदादौपम्ये इति ऊङ्०प्रत्ययः। प्रशस्तीरुकाया-मितिवाचस्पत्ये। (वाच० तृ०पृ० १६९६) करभ शब्दस्य व्याख्या यथा अमरे (२।६।८१) मणिबन्धादाकनिष्ठं करस्य करभो बहिः। अमरे अन्यदपि उष्ट्रस्यशिशुः करभः। अस्य प्रयोगः शाकुन्तले यथा- संवाहयामिकरभोरु यथासुखन्ते।

**कर्कन्धुः**–कर्काणां राज्ञाम् अन्धुः। कर्कन्धुः इत्यत्र टि सञ्ककत्वात् (पा०सू० १।१।६४) पररूपम्। कर्कदेशस्यः कूपः।

**कर्कन्ध्वा**–कर्कन्धू शब्दादङ०न्तात् टायां रुपम्। कर्कन्धूशब्दस्य व्युत्पत्तिर्यथा कर्क कण्टकं दधातीति अन्दूदृन्भू (उ० १।६३) इति निपातितः कु प्रत्ययान्तः। अत्रामरः (अमर० २।४।३६) कर्कन्धू वदरि कोली अन्यदपि अमरे (३।५।३८) यथा मुनिर्वराटका स्वर्तिवर्णका झाटर्लिमनुः। मृषासपाटी कर्कन्धू यष्टिः शीट कटि कुटी इति। एवमेव वाचस्पत्ये (तृ०पृ०.) कल्पद्रमादिषु च। (द्वि०पृ०३६)

**कर्तृ**–करोतीति। कृ धातोः तृन् तृच् वा प्रत्ययः। अत्र वाचस्पत्यम् (तृ०पृ० १७१६) क्रियानिष्पादके क्रियोत्पादकयत्नयुक्ते तृजन्त योगकर्मणि न षष्ठी इति भेदः। स च कारकचक्र प्रयोजत्वात् स्वतंत्रः यथाह पाणिनि-स्वतंत्रः कर्ता। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यादितिसिद्धान्तकौमुदी व्याकृतञ्च तद् सरलायाम् यथा- स्वतंत्र इति शपृश्नादि प्रत्यय समभिव्याहृत धातूपात प्रधानीभूतव्यापारश्रयत्वमितरव्यापारानधीन व्यापारत्वं वा कर्तृत्वम् बोध्यम् कर्मबोधक प्रत्ययसमभिव्याहारे फलस्यैव प्रधानतया बोधस्वीकतृस्मंते

कर्मादिव्यावृत्यर्थं शप् श्यनादिसमभिव्याहृतेति। णिजन्तस्थले प्रयोज्यस्य स्वातंत्र्यवारणाय प्रधानव्यापारेति। हरिणाऽपि स्वातंत्र्येविशेषो दर्शित: यथा- धातूपात्त क्रियेनित्यम् कारके कर्तृरतेष्यते। इति सामान्यतो अभिधाय प्राधान्यत: शक्तिलाभात् प्रागभावापादनादपि। तदधीनप्रवृत्तित्वात् प्रवृत्तानाम् निवर्त्तनात्। अदृष्टत्वात् प्रतिनिधे: प्रतिविवेके च दर्शनात्। आरादप्युपकारत्वात् स्वातंत्र्यं कर्तुरिष्यते। इति अस्या अर्थ: इतरव्यापारात् प्रागपि प्राधान्येन आत्मशक्ते: कर्तरिव्यापारस्य सत्वात्, तथा च इतरव्यापारानधीन व्यापारवत्वादित्यर्थ: इतरकारणञ्च कर्तु: प्रयोज्यत्वात् न तथा दात्रादेह: कुठारादिवत् कर्तु: प्रतिनिध्यसम्भवात् कारकान्तराप्रयोगोऽपि कर्तु: प्रयोगात् आरात् साक्षात् धातपात्तफलजनक व्यापारवत्वाच्च स्वातन्त्र्यम् कर्तुरिति। कौ० विवक्षित इति कर्मकरणादेरपि तत्तव्यापारस्य धातुनाभिधाने कर्तृत्वमिति द्योतनाय।

**उत्त्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।**
**व्यापारभेदापेक्षायाम् करणत्वादिसम्भव:।।**

इति हरिणा विवक्षावशात् सर्वेषां कर्तृत्वस्वीकारात्। भाष्यकृता तु पर्याप्तम् करणाधिकरण कर्मणामेव कर्तृत्वम् निदर्शितमपादानादिनाम् कर्तृत्वादि दर्शनाय। इत्युक्तत्वात् करणाधिकरणं कर्मणामेव विवक्षया कर्तृत्वमिति नापादानसंप्रदानयोरिति विवेक:। कारकव्यापारभेदश्च मञ्जूषायां दर्शित: संक्षिप्य तत शब्दार्थरत्ने दर्शितो यथा- कर्तु: कारकान्तर-प्रवर्त्तनव्यापार:। करणस्य क्रियाजनकाव्यवहितव्यापार:। क्रियाफलेनोद्देश्यकव्यापारश्च कर्मण:। कर्तृकर्मव्यवहितक्रियाधारणव्यापारोऽधिकरणस्य। प्रेरणानुमत्यादिव्यापार: सम्प्रदानस्य, अवधि भावोपगमव्यापारोऽपादनस्येति। तत्र करणाधार कर्मकर्तृकां क्रियाजनकत्वं सुव्यक्त तैर्विना क्रियानुत्पत्ते: फलरुपक्रियाजनकत्वेन विशिष्टक्रियाजनकत्वाच्च कर्मणस्तथात्वं घटं स्मरति कटं करोतीत्यादौ च बुद्धिस्थघटादेरपि पूर्वकालत्वेन अणादिहेतुत्वातथात्वमतएव तेषु कर्तृत्वविवक्षाया काष्ठं पचति स्थाली पचति ओदन: पच्यते इत्यादिप्रयोग:। अपादानस्य अवधिभावोपगमेव हेतुत्वात् सम्प्रदानस्य च दातृबुद्धिस्थतया पूर्वकालत्वेन हेतुत्वाच्च क्रियानिर्वाहकत्वेऽपि न कर्तृत्वविवक्षा अनभिधानात् तदुक्तं भाष्येऽपादानादीनां कर्तृत्वानि-दर्शनायेत्यन्तमनुपदं सरलाग्रन्थासे दर्शितम्। स च कारकाणां य ईश्वर:। स कर्त्ता नाम विज्ञेय: कारकाणां प्रयोजक: इत्युक्ते:। सच पञ्चविध: क्रियामुख्योभवेत् कर्ता हेतुकर्ता प्रयोजक:। अनुमन्ता ग्रहीता च कर्ता पञ्चविध: स्मृत: गोपालभट्टा० अतएव मनुना अनुमन्ता विशसिता नियन्ता क्रयविक्रयी। संस्कर्ता चोपहर्त्ता च षड़ेते धातका: स्मृता इति षण्णां घातकर्तृत्वमुक्तम् काशी ख० खादकोघातकस्तथेति चतुर्थचरणे पाठ:। तेन अष्टानां कर्त्तृत्वमुक्तम्। स च प्रकारान्तरेण त्रिविध: त्रिधैव ज्ञायते कर्त्ता विशेषेण क्रियां प्रति।

योगत्वप्रतिषिद्धत्वविशेषणपदान्वयैः भट्टका०। अस्यार्थः क्रियां प्रति प्रकारत्रयेण कर्त्ता विज्ञायते तस्य विवरणम् स्वाध्यायोऽध्येतव्यः इत्यत्र योग्यत्वेन लब्धविद्यस्त्रैवर्णिकः। अहरहर्दद्याद दीक्षितो न ददाति इत्यत्र योग्यत्वेन लब्धविद्यस्त्रैवर्णिकः। अहरहर्दद्यात् दीक्षितो ददाति इत्यत्र प्रतिषिद्धत्वेन दीक्षितेतरः परः। स्वर्गकामो यजेत् इत्यत्र विशेषणपदान्वयेन स्वर्गकाम कर्ता ज्ञायते। स च प्रकारान्तरेण त्रिविधः सात्त्विकादिभेदात् यथाहगीता मुक्तसङ्०गो ऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्य सिद्ध्यो र्निर्विकारः कर्त्ता सात्विक उच्यते। रागीकर्मफल प्रेप्सुर्लुब्धोहिंसात्मको ऽशुचिः। हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः अयुक्तः प्राकृतः स्तब्धः शठोनैष्कृतिकोऽलसः। विषादी दीर्घसूत्री च कर्ता तामस उच्यते। कर्तृपदञ्च क्रियाश्रये कृत्यात्रये वा मतभेदेन रुढं न तु यौगिकमित्येतत् शब्द चि० भट्टमतदर्शनप्रस्तावे दर्शितं यथा -

अथ क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यां घटाङ्०करषोः कृताकृतत्व-व्यवहारार्तृजन्तकृधातुव्युत्पन्नकर्तृपदस्य कृत्याश्रयत्वबोधकत्वाच्च कृञोयत्रार्थत्वं, क्रियामात्रार्थत्वे कृञः, क्रियात्रयः कर्तृपदार्थः स्यात्। तथा च कारकमात्रेऽतिप्रसङ्०गः एवञ्च कृञो यत्रार्थत्वेन चाख्यातविवरणात् तस्यापि यत्नोऽर्थः। तदुच्यते। कृताकृतविभागेन कर्तृरूप्व्यवस्थया। यत्रएव कृतिः पूर्वा परस्मिन् सैव भावना सैवाख्यातार्थोभावनेति चेत् वीजेनाङ०कुरः कृतः स्वर्गादिना सुखं कृतं वीजमङ्०कुरं करोतीति यत्नंविनापि व्यवहारात् कर्तृ पदञ्च न यौगिकं तथा हि कृञोयत्नार्थत्वे तिङ्० कृत्यर्थत्वे वा धातुप्रत्ययार्थयोः कृतिकृञोर्वा परस्परमनन्वयः कृतौ कृतिजन्यत्वस्य तद्विषयत्वस्य वा भावात् कृतिविशिष्टस्य कृतिनिराकाङ्०क्षत्वादिति। एवं कृञः क्रियार्थत्वे तृचश्च क्रिया त्रयवाचकत्वे तयोः परस्परमन्वय एवेति उभयदर्शने कर्तृपदं कर्मादिपदवद्रढमेव। रुढिश्च कृत्याश्रये क्रियाश्रयेवेत्यन्यदेतत् तथा च कृताकृतविभागेन च कर्तृरूपव्यवस्थया च न कृञो यत्नार्थत्वमिति किञ्चाख्यातस्य करोतेश्च न यत्नार्थत्वम् पाकाय यतते पाकं करोतीत्यादौ यत्नद्वयस्य यत्नविषयकयत्नस्य वा प्रतीतः प्रकृतिप्रत्यायार्थयोश्च साम्येनान्वयानुपपत्तेः पौनरुक्त्यात् एकत्रैव विध्यनुवाददोषा श्च इत्यादिकम् भट्टमतम्। स्वमते तु कृञः यत्नार्थत्वमिति भेदः। तच्च अधातुशब्दे दर्शयिष्यते। शब्द० प्र० कर्तृपदं योगिकमिति व्यवस्थाप्य तल्लक्षणमुक्तं यथा-

तिङा विकरणाततस्य धातोरर्थस्तु यादृशः। स्वार्थे यादृशि वोध्ययस्तत्कर्तृत्वं तदिहोच्यते। सविकरणेन यद्धातुनोपस्थाप्योयादृशार्थ स्तदुत्तरतिङ। स्वोपस्थाप्ययादृशार्थोऽनुभावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वं कारकमित्यर्थः। कर्मत्वादौ धातुनोपस्थाप्योऽर्थे स्तिङानुभाव्योऽपि न विकरणोक्तेनेति न तत्र प्रसङ्०गः। पचति जानातीत्यादौ स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाकबुद्ध्यादेरन्वयः पचाद्युत्तरतिडा बोध्यत

इति पाकस्य यत्नवत्वं ज्ञानस्याश्रयत्वमेवं नश्यतीत्यत्र नाशस्य प्रतियोगित्वं प्रतिविम्बत इत्यत्र भ्रमात्मनः प्रतिविम्बस्य प्रकारत्वमेव कर्तृत्वम्। कर्तृशब्दस्तु अवयवृत्तिलभ्ये कृत्याश्रये यौगिकएव न तु शक्यार्थकः प्रकारान्तरालभ्यस्यैव शक्यत्वात् निरूढलक्षणया शक्त्यैव पात्रयत्वस्य तृचा प्रत्यायनात्। घटस्य कर्त्तेत्यादौ चानुकूलत्वं षष्ठ्यर्थः फलस्य प्रायशः कृतिविषयत्वात् घटाद्युपभोगानुकूलकृतिश्च न घटाद्यनुकूला प्रमाणाभावात् अतो न घटादिभोक्तुस्तत्कर्तृत्वप्रसङ्०गः। क्रियाश्रये कर्तृशब्दोरुढस्तेन रथादेर्गत्यादिकर्तृत्वमपि मुख्यमेवेति तु न युक्तम्। क्रिया हि नात्र स्पन्दश्चेतनस्य पाककर्तृत्वानुपपत्तेः प्रत्युत तण्डुलादेरेव तथात्वापतेः नापि धात्वर्थमात्रम् अतएव, नापि स्पन्दनानुकूलव्यापारः चलनानुकूलव्यापारवतः कारकमात्रस्य चलनकर्तृत्वापत्तेः। अत्ति जुहोतीत्यादावप्यदातेरुत्तरं लुप्तस्यैव विवरणस्य प्रतिसन्धाने भोजनकर्तृत्वादेरववगम इति। तदप्रतिसन्धानेऽपीति मतेनाह। यगन्तभिन्नधात्वर्थवत्तया योऽनुभाव्यते। लटा स्वार्थःस धात्वर्थ कर्तृता वा निगद्यते। यगन्तभिन्नधातूपस्थाप्ययादृशार्थ प्रकारयदर्थ धर्मिकान्वयबोधं प्रतिलटः सामर्थ्यं स एवार्थो धातूपस्थाप्य तदर्थस्य कर्तृत्वम् पच्यत इत्यादौ धातोरर्थवत्तयास्वार्थकर्मत्वं लटानुभायमपिन यगन्तभिन्नस्य पच्यते तण्डुल इत्यादौ तु तादृशस्य धातोरर्थवत्तया तिङैव स्वार्थ कर्मत्वमनुभाव्यते न तद्विशेषेण लटेति तव्युदासः। अपादानत्वादिभेदेन षड्विधत्वमिवोक्तानुक्तत्वभेदेन कारकस्य द्वैविध्यमप्यस्तीति तदनुक्त्या न्यूनत्वमत आह। धात्वर्थस्य मितया तिङाद्यैरनुभाव्यते। यत्तदुक्त धर्मतया त्वनुक्तं कारकं भवेत्। धात्वर्थस्य विशेषतया तिङाद्यनुभव्यत्वमेव कारकस्योक्तत्वं द्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वं न तु धातुनाकाङ्०क्ष-प्रत्ययस्याभिधेयत्वमात्रमुक्तं तण्डुलं पचति इत्यादावपि कर्मत्वादेरुक्तत्वापतेः। पचति पच्यत इत्यादौ तिङा, पाचकः, पच्यमानइत्यादौ च कृता, कर्तृत्वं कर्मत्वञ्च धात्वर्थविशेष्यत्वेनानुभाव्यते तथा पचनं काष्ठ, दानीयो द्विजः भीमोगजः, शयनं गृहमित्यादौ यथाक्रमं करणत्वादि व्युत्पत्तिवैचित्र्येणच पदार्थैकदेशेऽपि कर्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात्। सेवितं साम्प्रतं विज्ञैर्गुरुः परुषवागपि विषवृक्षोऽपि सम्बर्द्ध्यस्वयं छेतुमसाम्प्रतम् इत्यादौ निपातेन क्वचित् कर्मत्वकारकस्योक्तत्वम्। धातुभेदेन कर्मत्वकारकस्योक्ततायां नियममाह। दुहादिभ्यः प्रत्ययेन मुख्यकर्त्तत्वमुच्यते। णिजन्तेभ्यः कर्तृताख्या तद्सत्वेऽन्यकर्मता। दुहाद्युतरप्रत्ययेन मुख्यं साक्षाद्धात्वर्थतावच्छेदकं यत्कर्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेभानुभाव्यते तेन गौः पयो दुह्यते दुग्धा वेत्यत्र पयः कर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरित्येवं बोधः। तत्र मोचनावच्छिन्नव्यापारस्य धातुवाच्यतया मोचनस्यैव साक्षाद्धात्वर्थतावच्छेदकफलत्वात्। वह्रिप्रभृतेर्गत्यवच्छिन्नव्यापारः। कृषेश्च गत्यवच्छिन्नविकर्षणं वाच्यमतः साक्षात् तद्वाच्यतावच्छेदकं गतिमत्वमेव फलं न तु तद्घटकसंयोगादि। तथा च भारोभवनं नीयते इत्यादौ शाखा ग्रामं कृष्यते इत्यादौ च

यथाक्रमं भवनकर्मकगत्यनुकूलव्यापारजन्यगतिमान् भारः ग्रामकर्मकगत्यवच्छिन्नविकर्षण-कर्मताश्रयः शाखेत्याकारकबोधयोरुत् - पत्तयैव मतौ दुहादेगौणकर्मत्वं, नीवहादेः प्रधानत्वमित्याद्युक्तिभेदेन विधिद्वयं शाब्दिकानामनादेयम्। णिजन्तोतरं कर्मतावाचिप्रत्ययस्थले तु मूलधातोः कर्तृतायाङ्कर्मतातिदेशसम्भवे तादृशमेव कर्मत्वं धात्वर्थस्य विशेष्यतया तिडाद्यैर्बोध्यते यथा चैत्रोग्रामं गम्यते गमितोवेत्यादौ ग्रामकर्मकव्यापारजन्यगमनस्य कर्त्ता चैत्र इत्यादि। यत्र तु न तदतिदेशः तत्र मूलधातोः कर्मत्वमेव तदर्थविशेष्यतया तैरुच्यते यथा ओदनः पाच्यते खाद्यते वा भृत्येन भर्त्रा इत्यादौ तत्र भर्तृ कर्तृकव्यापारजन्यस्य भृत्यकर्तृकपाकादेः कर्मतयौदनादिरेव बोध्यते मैत्रेण पूगं खाद्यमानश्चैत्रोव्रजतीत्यादौ कर्मणि शानजादिप्रत्ययः प्राक् परिचिन्तितः।

न्यायादिमते कृतिमानेव कर्तृशब्दवाच्यः इत्यतः कर्तुत्वमात्रधर्मः। सांख्यमते-बुद्धेयोऽयं कर्तृत्वाभिनिवेशस्तदुपरागदकर्तुः पुरुषस्यापि तदभिमानः। तदेतत् सां०प्र०सू० भाष्योदर्शितम् यथा -

**उपरागात् कर्तृत्व चित्सान्निध्याचित्सान्निध्यात् सू०।**

अत्र यथायोग्यमन्वयः। पुरुषस्य यत् कर्तृत्वं तद्बुध्युपरागात् बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात्। एतदुभयमवास्तवमित्यर्थः। यथाग्नायसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिको यथा वा जलसूर्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरूषयोरिति भावः भा०।

पुरुषस्य यथा कर्तृता तथा सां०कौ० व्यवस्थापितं यथा तस्माच्च विपर्यासाल्लिङ्०गं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थां इष्टत्वमकर्तृभावश्च का०। तस्माच्चेति यः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोतीति विपर्यासादस्यादित्युक्तौ त्वैगुण्यविपर्ययात्यिन्तरोक्तं सम्बध्येत अतस्तन्निरासाय तस्मादित्युक्तम् अनन्तरोक्तं हि सन्निधानादिदमोविषयो विप्रकृष्टश्च तद् इति विप्रकृष्टं त्रिगुणमविवेकोत्यादि सम्बन्ध्यते। तस्मात् त्रिगुणादेः यो विपर्यासः पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वञ्च। तत्र चेतनत्वेन अविषयत्वेन च साक्षित्वद्रष्टत्वे दर्शिते चेतनोहि द्रष्टा भवति नाचेतनः साक्षी च दर्शितविषयोभवति यस्मै प्रदर्श्यते विषयः स साक्षी यथा हि लोके अर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः एवं प्रकृतिरपि स्वरचितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। न चर्चितनोविषयो वा शक्योविषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी अतएव द्रष्टापि भवति अत्रैगुण्याच्चास्य कैवल्यम् आत्यन्तिको दुःख त्रयाभावः कैवल्यं तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्सुख-दुःखमोहरहित्वसिद्धिम्। अतएवात्रैगुण्यान्माध्यस्थां सुखी हि सुखेन तृप्यन् दुःखी हि

दु:खं द्विषन्न मध्यस्थोभवति तदुभयरहितस्तु मध्यस्थ इत्युदासीन इति। चाख्यायते। विवेक्षित्वादप्रसवधर्मित्वाचकर्तेति सिद्धम्। स्यादेतत् प्रमाणं न कर्त्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षनु करोमीति कृतिचैतन्ययो: सामनाधिकरण्यमनुभवसिद्धं तैदतस्मिन्ते नावकल्पते चेतनस्याकर्तृत्वा त्कर्तुश्चाचेतेन्यादित्यत आह कौ० तस्मात्तत्संयोगदचेतनं चेतनावादेव लिङ्०गम्। गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीन: कौ०।

यतच्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तित: सिद्धे तस्माद्भ्रान्तिरियमित्यर्थक:। लिङ्०गं महदादिसूक्ष्मपर्य्यन्तं वक्ष्यति भ्रान्तिवीजं तत्संयोस्तन्निदानम अतिरोहितार्थमन्यत् कौ०। तदेतन्मतमवाप्य मुक्तावल्यां निराकृतं यथा एतेन प्रकृति: कर्त्री पुरुष: पुष्करपलाशवन्निर्लेप: किन्तु चेतन: कार्य कारणयोरभेदात् कार्यनाशे कार्यरूपतया नाश: स्यादित्याकरणत्वं तस्य बुद्धिगतचैतन्याभिमानार्थनुपत्त्या तद्कल्पनम्। बुद्धिश्च प्रकृते: प्रथम: परिणाम:। सैव महत्त्तवमन्त: करणप्युच्यते। तत्सत्वासत्वाभ्यां पुरुषस्य संसारापवर्गो। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरुपा घटादिना सम्बन्ध: पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्। ममेदं कर्त्तव्यमिति मदंश: पुरुषोरागो बुद्धे: स्वच्छतया चेतनप्रतिविम्बादतात्विकोदर्पणस्येव मुखोपराग:। इदमिति विषयोपराग इन्द्रियप्रणालिकया परिणतिभेदस्ताविको निश्वासाभिहतदर्पणस्येव मलिनिमा। कर्त्तव्यमिति व्यापारावेश:। तेनां शत्रयवतो बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्याताात्विक: सम्बन्धोदर्पणमलिम्नेव सुखस्योपलब्धिरुच्यते। ज्ञानादिवत् सुखद:खेच्छाद्वेषप्रयत्नधर्म्याधर्मा अपि बुद्धिरेव कृतिसामानाधिकरण्येन प्रतीते:। न च बुद्धिश्चेतना परिणामित्वार्दिति सांख्यमतमपास्तम् कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तदभिन्ने मानाभावाच्चेतनोऽहं करोमीति प्रतीते:। बुद्धे: परिणामित्वाच्चैतन्यांशे भ्रम इति चेत् कृत्यंशे किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे तत्पूर्व्वसंसारापत्ति:। अचेतनाया: प्रकृते: कार्य्यत्वात् बुद्धेरचैतन्यं कार्य्यकारणयोस्तादात्म्यादिति चेन्न असिद्धे:। कर्तृजन्यत्वे मानाभावात् वीतरागजन्यादर्शनाद् नादित्वम्। अनादेर्नाशासम्भवान्नित्यत्वम् मुक्ता०। वेदान्तिमते अविद्यकजीवस्यैवौपाधिकं कर्तृत्वं शा०सू भा० व्यवस्थापितम् एतत् सर्वं वाचस्पत्ये।

**कल्माषी**—कल्माष शब्दात् अन्यतोङीष् (पा०सू० ४।१।१०) इति ङीष् प्रत्यय:। कलयतीति कल् क्विप् प्रत्यय:। भाषयत्यमिभवति वर्णान् इति भाष:। चुरादि पाठात् णिच्। कल चासौ माषश्च कलमाष:। कल्मासो राक्षसे कृष्णे शुक्लेऽपिइति हेम:। (३।७७३) अमरेऽपि (१।५।१७) यथा चिकर्मीर कल्माष शवलेताश्चकर्बुरे इति। एवमेववाचस्पत्ये (तृ०पृ०१८३५) कल्पद्रुमे (द्वि०पृ०६६) च कल्माषे यातुधाने इति मेदिनी। (१६८।३३) एवमेवोन्यकोशेषु।

**कात्यायनी**–कतस्यापत्यं कात्यः गर्गादित्वाञ् (पा०सू० ४।१।१०५) सर्वलोहितादिकतन्तेभ्यः (पा०सू० ४।१।१८) इति ष्फः षित्वाडीषः। (तदैव ४।१।४१) अस्य पर्यायथामरे (१।१।३ ) -

**उमा कात्यायनी गौरी काली हैमवतीश्वरी।**
**शिवाभवानी रुद्राणी सर्वाणी सर्वमंगला।**
**अर्पणा पार्वती दुर्गा मृडानी चण्डिकाम्बिका।**
**आर्या दाक्षायणी चैव गिरजा मेरुकात्मजा।**
**कर्मकोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका।।इति।।**

हैमे यथा-**कात्यायनो वररुचौ कात्ययनी तु पार्वती।**
**काषायवस्त्र विधवार्धवृद्धमहिलापि च।।** एवमेववचास्पत्यादिषु।

**कारीषगन्ध्या**–करीषं गवादि पशुपुरीषं तस्येव गन्धो यस्य इति करीषगन्धि। करीषगन्धेः गोत्रापत्यं स्त्रीत्यर्थेऽण् प्रत्ययः तस्य स्यङ्०गादेशः ततः यङश्चाप् (पा०सू० ४।१७४) इति चाप् प्रत्ययः। एवमेववाचस्पत्यादिषु।(तृ०पृ० १९४३)

**कारिका**–कारकशब्दाट्टापि सर्वणदीर्घेकृते प्रत्ययस्थात्कात् (पा०सू० ७।३।३४) पूर्वस्यात् इदाप्यसुपः इति। कात्पूर्वस्य रेफादकारस्य इत्वम्। कारिकाशब्दस्य व्याख्या कारिकायातना कृत्योरित्मरः। (३।३।१५) मेदिन्यान्तु (६।६३-६४) कारिका नटयोषिति। कृतौ विवरणश्लोके शिल्पयातनयोरपि नपुंसकम् तु कर्मादौ कारकम् कर्तरि त्रिषु। एवमेव वाचस्पत्यकल्पद्रुमादिषु। (द्वि० पृ० १००)

**कारभूः**–कर एव कारः स्वार्थिकः प्रज्ञाद्यण्। तस्य भूः। राज्यग्राह्यकर ग्रहणभूमौ इति वाचस्पत्यम्।(तृ० पृ० १९४२)

**किम्**–कूयते कवनं वा। कुशब्दे धातोः बाहुलकाड्डिम्प्रत्ययः। कायते। डिमिः (उ० ४।१५८) वा। अत्रामरः (३।३।२५१)

किं पृच्छायां जुगुप्सने। अमरे (३।४।५) अन्यदपि आहो उताहो किमुत विकल्पे किं किमु उत् च। मेदिन्याम् (१८३।५२) यथा- किं कुत्सायाम् वितर्के च निषेध प्रश्नयोरपि। वाचस्पत्ये (तृ०पृ०२०४८) केचन अन्येऽप्यर्था यथा- जिज्ञासितेसादृश्ये (प्रकारे) करणे ईषदर्थे अतिशये च इति। तत्र त्रिलिङ्०गस्य सर्वनामता।

**किल्**–अव्य०। किलति। किलश्वैत्यै धातोः। इगुपधज्ञपृकरः (पा०सू० ३।१।३५) कः। अत्रामरः (अमर० ३।३।२५४) वार्तासम्भाव्ययोः किल। विश्वे (३।३।४६७) यथा-किल शब्दस्तु वार्तायाम् सम्भाव्यानुनयार्थयोः। त्रिकाण्डशेषेयथा (३।३।४६७)

वार्तायामरुचौकिल। एवमेवमेदिन्याम्। (१८५।७३) वाचस्पत्ये (तृ० पृ० २०५४) यथा - अनुशार्थे निश्चये प्रसिद्धार्थद्योतने तिरस्कारेइत्यादि एवमेव शब्दकल्पद्रमे। (द्वि० पृ०१२९) अन्येऽपि कोशकारा एष्वर्थेषु सम्मताः सन्ति वार्तार्थ यथा जघान कंसं किलवासुदेवः सम्भावनायाम् यथा-अर्जुनः किल् विजेष्यते कुरून् इत्यादि।

**कियंह्यः**—किम् ह्यः इत्यत्र यवलपरे यवलावेति वक्तव्यमिति वार्तिकेन यथासंख्य अनुनासिक वैकल्पिके यांदेशे कियह्यः। पाक्षिके अनुस्वारे किं ह्यः किम् शब्दविषये उक्तम्। ह्यशब्दविषये उच्यते। ह्यः इत्यव्ययम् पूर्वेद्युरर्थे तथा चामरः (३।४।२२) ह्योऽतीते इति तस्य व्युत्पत्तिः इति। पृषोदरादिः (पा०सू० ६।३।१०९) एषमोह्यः (पा०सू० ४।२।१०५) श्वसोऽन्यतरस्यामिति निर्देशाच्चरूपसिद्धिः।

**कुण्ठितः**—कुठि प्रतिघाते धातोः इदित्वानुम् क्त प्रत्ययः इडागमश्च अत्र नश्चापदान्तस्य (पा०सू० ८।३।३४) झलि इति नस्यानुस्वारे अनुस्वारस्य (तदेव ८।४।५६) ययि परसवर्णः इति परसवर्णे णकारे कृते कुण्ठितः इति। अस्य व्याख्या कल्पद्रुमे (द्वि० पृ०१३८) संकुचितः महानाटके प्रयोगो यथा- दशवदनभुजानां कुण्ठिता यत्र शक्तिः। कुण्ठशब्दस्यपर्यायः यथामरे- (३।१।१७) कुण्ठोमन्दः क्रियासुयः। मेदिन्याम् (३९।३) यथा- कुण्ठोऽकर्मण्यमूर्खयोरिति।

**कुण्डी**—कुण्, शब्दोपकरणयोः धातोञमन्ताड्डः (उ० १।११४) इति ड प्रत्ययः अमत्रे पात्रे अर्थे जानपदकुण्ड (पा०सू० ४।१।४२) इति ङीष्। अत्रामरः (२।७।४६)

अस्त्री कमण्डलुः इति मेदिन्यान्तु (४०।४।५) कण्डमग्नालये मानभेदे देवजलाशये कुण्डी कमण्डलौ जारात् पतिवत्नीसुते पुमान्। पिठरे तु ना इति। एवमेव वाच (तृ०पृ० २०९३) (शब्द द्वि पृ०१४०) च। अन्यत अमत्राद्भिन्नेऽर्थे कुण्डाएव।

**कुण्डोध्नी**—कुण्डमिव ऊधोयस्याः। इत्यत्र ऊधसोऽनङ्० (पा०सू० ५।४।१३१) इत्यनङि० कृते डाव्डीब्निषेधेषु प्राप्तेषु बहुव्रीहेरुधसो (तदेव ४।१।१२५) ङीष्। कुण्डशब्दस्य व्याख्या यथामरे (२।९।३१) पिठरः स्थात्युखा कुण्डम् वाचस्पत्ये (तृ०पृ० २०७६) यथा- कुण्ड्यते रक्ष्यते जलम् वह्निर्वा यत्र कुडिरक्षायाम् आधारे धातोरच् णिलोपः एवमेवकल्पद्रमे। (द्वि० पृ० २३९) मेदिन्याम् (४०।४) यथा कुण्डमग्नालये मानभेदे देवजलाशये। ऊधशब्दस्य व्याख्या ऊधस्तु क्लीबमापीनमीत्यमरः। (२।९।७३) स्त्रियामपि कुण्डोधो धैनुकम्। ऊधस् शब्दस्य विशेष व्याख्याव्युत्पतिश्च द्वयूघ्नीप्रयोगे द्रष्टव्या।

**कुमारी**—कुमारीमात्मन इच्छतीत्यर्थे क्यचि विभक्ति लुकि ततः क्विपि। यद्वा कुमारयति कुमार क्रीडायां धातोः अच्। गौरादित्वात् डीष् । यद्वा कामयते कमु कान्तौ धातोः कमे

किदुच्चोपधायाः (उ० ३।१३८) इत्युणादिना आरन्। वयसि (पा०सू० ४।१।१०) प्रथमे इति डीष्। कुमारी राम तरुण्यां नवमात्येनदीभिदि। कन्यापारिजाता गौरीजम्बद्वीपेषु च स्मृता इति विश्वः। (१३९।१७५) अमरे (२।४।७३) यथा- सहा कुमारी तरणिः; वाचस्पत्ये (तृ० पृ० २१११) यथा- अनूढ कन्यायां वर्षभेदेन तन्नामभेदाः। एवमेव कल्पद्रुमे। (द्वि पृ० १४६) मेदिन्याम् (१३२।१३९) यथा। कुमारी शैलतनया नवमाल्यो नदीभिदि इति। अन्येषामपि कोशकाराणामेवं मतम्।

**कुरुः**–कुरु क्षेत्रस्य राजा कुरुः, तस्यापत्यं स्त्री, गोत्रञ्च चरणैः सह इति जातित्वम् कुरु शब्दात् ऊङु०तः (पा०सू० ४।१।६६) इति ऊङि० सवर्ण दीर्घः विभक्ति कार्यम्। कुरु शब्दस्य व्युत्पत्तिर्यथा वाचस्पत्ये (तृ० पृ० २१२२) कृ धातोः कृग्रोरुच्च (उ० १।२५) इत्युणादिना कुः उच्च। चन्द्रवंशे आजमीढनृप प्रपौत्रे राजभेदे तदीय निवास भेदः एवमेवकल्पद्रुमे। (द्वि० पृ० १५१) मेदिन्यां (१२४।१६) यथा कुरुनृपान्तरे इति।

**कुरुचरी**–कुरुषु चरतीति अधिकरणे उपपदे चरेष्टः (पा०सू० ४।१।१५४) उपपदसमासटित्वात् डीप् (तदेव ३।१।१३४) प्रत्ययः। कुरुदेशाधिकरणकचरणकर्त्री।

**कुलटा**–कुलान्तरं व्यभिचारार्थ भिक्षार्थमटतीति। अट् धातोः अच् (पा०सू० ३।१।१३४) प्रत्ययः। कुलस्य अटा वा शकन्ध्वादित्वात् पररूपम्। (वा०। ६।१।९४) तथा च अमरः (२।६।१०।११)

पुंश्चली चर्षणी बन्धक्यसती कुलटे त्वरी। स्वैरिणी पांशुला इति। मेदिन्यां (३६।३९) यथा– कुलटा मनः शिलायां नेपाल्यामपि योषिति एवमेव वाचस्पत्ये। (तृ० पृ०२१३०) कल्पद्रुमे (द्वि० पृ० १५२) यथा–

धृष्टा, दृष्टा, धर्षिता इति शब्दरत्नावली। लङ्०का निशाचरी त्रयारण्डा इतिजटाधरः। तत्रैव एवमेवान्यकोषकाराणाम् मतम्।

**कुवित्**–अव्य०। कुः भूमिरिव विद्यते ज्ञायते बाहुल्यात् विद् भावे क्विप्। बाहुल्ये प्रशंसाया ञ्च। इति वाचस्पत्यम्। (तृ० पृ० २१४२)

**कुशी**–कुं भूमिं श्यति तनूकरोति शोतनूकरणे धातोः अन्येभ्योऽपि (वा० ३।२।१०१) इति डः। जानपद (पा०सू० ४।१।४२) इति डीष्। अत्रामरः (२।९।९) विकारस्त्वयसः कुशी। एवमेव वाच (तृ० पृ० २१५३) कल्पद्रमे (द्वि० पृ० १६०) च। कुशीफाले इति मेदिन्यां (१६२।४) अयोविकारादन्यदर्थे कुशा एव।

**कूपत्**–अव्य०। प्रश्ने प्रशंसायाम्। इति वाचस्पत्ये।(तृ० पृ० २१६५)

**कृष्णः**—कृष्णो वर्णोऽस्यास्तीति। कृषेंवर्णं (उ० ३।४) इति नगन्तात् गुणवचनेभ्यो (वा० ५।२।९४) मतुपोलुक्। कर्षत्यरीनिति वा बाहुलकाद्वर्णं विनापि कृषेः कृष् विलेखने धातोः नक् (उ० ३।४) प्रत्ययः। अत्रामरः (१।१।१८।२१) –

**विष्णुनारायणो कृष्णो वैकुण्ठोविष्टरश्रवाः।**
**दामोदरो हृषीकेशो केशवो माधवः स्वभूः।।**
**दैत्यारि पुण्डरीकाक्षो गोविन्दो गरुडध्वजः।**
**पीताम्बरोऽच्युतः शाङ्०र्गी विष्वकसेनो जनार्दनः।।**
**उपेन्द्रो इन्द्रावरजश्च चक्रपाणिः चतुर्भुजः।**
**पद्नाभोऽरविन्दाक्षः वासुदेवस्त्रिविक्रमः।।**
**देवकी नन्दनः शौरिः श्रीपतिः पुरुषोत्तमः।**
**वनमाली वलिध्वंसी कंसारातिरधोक्षजः।।**
**विश्वम्भरः कैटभजित् विधुः श्रीवत्सलांछनः।**
**पुराणपुरुषो यज्ञपुरुषो नरकान्तकः।।**
**जलशायी विश्वरूपो मुकुन्दो मुरमर्दनः।**

मेदिनीकारेण (४५।७-८) यथा–

सत्यवती पुत्रे व्यासे केशवेऽर्जुने। कृष्णा स्याद् द्रौपदी नीली कर्णाद्राक्षासुयोषिति। मेचकेवाच्यलिङ्०ग स्यात् क्लीवे मरिचलोहयोः अन्यदपि अमरे (१।५।१४) कृष्णोनीलासित-श्यामकाल श्यामलमेचकाः अन्यदपि अमरे (२।९।३६) कृष्णे तु जीरके सुषवी कारपृथवी कालोपकुञ्चिका। प्रायः एवमेव वाचस्पत्यादिषु।(पा०सू० २२१०)

**कृष्णा**—कृष्णोवर्णोऽस्त्यस्याः अर्शआद्यच् (पा०सू० ५।३।१२७) टापि। तथाचामरः (अमर० २।४।९६) कृष्णोपकृत्या वैदेही मागधी चपला कणा, उषणा पिप्पली शौण्डी कोला इति। मेदिन्यां यदस्ति तत्तु कृष्ण शब्दे लिखितमस्ति। प्रायः सर्वेकोषकारा एष्वर्थेषु सम्मतासन्ति।

**कृष्णैकत्वम्**—कृष्णस्य एकत्वमिति षष्ठीसमासः पूरणगुण इति निषेध स्त्वनित्यः कृष्णेति सम्बुद्ध्यन्तं पृथक् पदमित्यन्ये, अत्र अकारस्य एकारस्य च कण्ठतालुस्थानिकयोः स्थाने तथाविध वृद्धि ऐकारादेशः। कृष्ण शब्दस्य व्याख्या कृष्ण प्रयोगे द्रष्टव्यः। एक शब्दः एकत्वसंख्यावाची। एकस्यभावः एकत्वम्।

**केवलीविंश**—केवल (पा०सू० ४।१।३०) शब्दात् केवलमामक भागधेयपापानार्यकृत-सुमङ्०गलभषजात्चेति डीप् प्रत्ययः संज्ञाछन्दसोरेव अन्यत् संज्ञाछन्दसाभावात् केवलैव केवल शब्दस्य व्युत्पत्तिर्यथाकेवते केवृसेचने धातोः वृषादित्वात् (उ० १०६) कलः। के

शिरसि वलयति वा। बल प्राणने धातोः पचाद्य च् तथाचामरः (३।३।२०३) निर्णीते केवलमिति त्रिलिङ्०गं त्वेककृत्स्नयोः मेदिन्यां (१५१।८३-८४) यथा- केवलेः कुहने पुमान् नपुसकन्तु निर्णिते वाच्यवाच्यैक कृत्स्नयोः। केवली ज्ञानभेदेऽथ (वाच० तृ० पृ०२२४४) एवमेव कल्पद्रुमादिषु। (द्वि० पृ० १९५)

**कोकिला**—जातिलक्षण ङीषं बाधित्वा टाप्। कोकते इति। कुक आदाने धातोः सलिकुत्थनि (उ० १।५४) इति इलच् प्रत्ययः। कोकिल शब्दस्य व्याख्या यथामरे (२।५।१९)–

वनप्रियः परभृतः कोकिलः पिक इत्यपि। कल्पद्रमे (द्वि० पृ० २००) यथा- परभूत कालः वसन्तदूतः ताम्राक्षः गन्धर्वः मधुगायनः, वासन्तः कलकण्ठः, कामान्धः, काकलीरवः कुहूरवः अन्यपुष्टः मत्तः मदनपाठकः इति राजनिर्घटः एवमेववाचस्पत्ये। (तृ०पृ० ३२६१)

**क्रोष्टु**—क्रोशति आह्वायति शब्दंकृत्वा। क्रुश् आह्वाने धातोः सितनि (उ० १।६९) इति तुन् प्रत्ययः। अस्य पर्यायः यथामरे (२।५।५) –

**स्त्रियां शिवा भूरिमाय गोमायुर्मृगधूर्तकाः।**
**शृङ्०गालवञ्चकक्रोष्टफेरुफेरव जम्बुकाः।।**

एवमेववाच( तृ० पृ० २३४०) स्पत्यकल्पद्रुमादिश्च। (शब्द द्वि० पृ० २२०)

**क्रोष्ट्री**—क्रोष्टु शब्दात् तृज्वद्भावे ङीप्। (पा०सू० ४।१।५) तद्व्याख्या यथामरे- (२।४।११०)

विदारि क्षीरशुक्लेक्षु गन्धा क्रोष्ट्री च यासिता। मेदिन्यान्तु (१२४।२०।) क्रोष्ट्री शृङ्०गालिका कृष्णा विदारी लाङ्०गलीषु चेति। एवमेववाचस्पत्ये (वाच० तृ० पृ० २३४१) कल्पद्रुमादिषु (द्वि० पृ० २२१) च।

**क्षमा**—क्षमते आत्मोपरिस्थितानां जीवानामपराधनं या। क्षमूसहने धातोरच् षित्वादङ्०वा ततष्टाप। तथा चामरः (३।३।१४२)–

**क्षितक्षान्त्योः क्षमायुक्ते क्षमं शक्ते हिते त्रिषु।**

मेदिन्यां (१०८।४) यथा- क्षमा भूमौ तितिक्षायां स्त्रियां युक्ते नपुंसकम् एवमेव वाचस्पत्ये (तृ० पृ० २२६२) कल्पद्रुमे (द्वि० पृ० २२८) तत्र क्षमा लक्षणं यथा-

**वाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्।**
**न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता।।**

**क्षत्रिया - क्षत्रियाणी**—क्षत्रियस्य स्त्री। आर्य क्षत्रियाभ्यां वा इति वार्तिकेन स्वार्थे आनुगभावे टाप् योपधत्वात् न ङीष्। पक्षे आनुगागमः ङीष्। तथाचामरेः (२।६।१४) क्षत्रिया क्षत्रियाणी अपि एवमेव कल्पद्रुमादिषु।( पृ० २२८)

**क्षिपका**—क्षिप - कन् - टाप् अतो नेत्वम् नयासयोः (पा०सू० ७।३।४५) इत्यस्य सूत्रस्य वार्तिके क्षिपकादीना ञ्च इति कथनात्। एवमेव कल्पद्रुमादिषु। (द्वि० पृ० २३४)

**खञ्जः**—खजिगति वैकल्ये धातोः अप् (पा०सू० ३।१।१३४) प्रत्ययः। अत्रामरः (२।६।४९) - खोडे खञ्जः द्वे गति विकल्यस्येति तट्टीका। मेदिन्यां (३०।६) यथा- खञ्जा छन्दप्रभेदे स्त्री कुटिलांघौ तु वाच्यवत्।। एवमेव वाचस्पत्ये। (तृ० पृ० २४५५) कल्पद्रुमे (द्वि० पृ० २७१) यथा- खोतः इति शब्दरत्नावली। खोरः खञ्जकः इति हेमचन्द्रः। खोटः इति धात्वर्थ दर्शनात्।

**खलपू**—खलं भूमिं पुनाति परिष्कृतं करोतीति। खलोपपद पूङ्० पवने धातोः क्विप् प्रत्ययः। मार्जकारी इति भाषा इति कल्पद्रुमः। (द्वि० पृ०२७८) अमरे (३।१।१७) यथा- खलपूस्याद् बहुकरः। एवमेव वाचस्पत्यादिषु।(तृ० पृ० २४६९)

**खलु**—अव्य०। खलति। खल सञ्चये धातोः। बाहुलकादुः। खलु स्याद्वाक्य भूषायां जिज्ञासायां च सान्त्वने वीप्सामान निषेधेषु पूरणे पदवाक्ययोः इति मेदिनी (१८४।७३) निषेधे वाक्यालंकारे जिज्ञासानुनये खलु इत्यमरः। (३।३।२५५) निश्चये अर्थेप्यस्तिशब्दोऽयम्। एवमेव वाचस्पत्ये (तृ०पृ० २४७०) कल्पद्रुमे (द्वि० पृ० २७९) च। तत्र निश्चये महाकविकालिदासेनापि स्वकीये अभिज्ञानशाकुन्तले (१।१०) प्रयुक्तः यथा-

**न खलु न खलु वाणाः सन्निपात्योऽमस्मिन्,**
**मृदुनि मृगशरीरे तूलराशाविवाग्निः।**
**क्व वत्-हरिणकानां जीवितं चाति लोलम्**
**क्व च निशित निपाता बज्रसारा शरास्ते।।**

**गङ्०दोकम्**—गङ्०गायाः उदकम्। षष्ठीसमासः। गङ्०गा उदकमित्यत्र आद्गुणः (पा०सू० ६।१।८७) इति सूत्रेण कण्ठोष्ठ स्थानिकयोः तथाविध एक्रोगुण ओकारः। गङ्०गा शब्दस्य व्युत्पत्तिर्यथा गमयति प्रापयति ज्ञापयित वा भगवत पदं या शक्तिः यद्वा गम्यते प्राप्यते मोक्षार्थिभिया। गम गतौ धातो गन् गम्यद्योः इत्युणादिना गन् प्रत्ययः (उ० १-२२) ततष्टापि प्रत्यये सति गङ्०गा शब्दो निष्पद्यते। तत्पर्यायाः यथामरे (१।१०।३१)

**गङ्०गाविष्णुपदीजह्नुतनया सुरनिम्नगा।**
**भागीरथी त्रिपथगा त्रिस्त्रोता भीष्मसूरपि।।**

कल्पद्रुमेऽन्येऽपि (शब्द द्वि० पृ० २८५) बहव अर्थास्संकलिता सन्ति यथा अर्घ्यतीर्थम्, तीर्थराजः, इति पद्मपुराणम् त्रिदशदीर्धिका कुमारसूः, सरिद्वरा, सिद्धापगा, स्वरापगा, स्वगर्यापगा, स्वार्यापगा, स्वापगा ऋषिकुत्या हैमवती, स्र्वव्यापी हरशेखरा इति हेमचन्द्रः। सुरापगा धर्मद्रवी सुधा जह्नुकन्या, गान्दिनी, रुद्रशेखरा, नन्दिनी, अलकनन्दा सितसिन्धुः इति जटाधरः। ऊध्वर्गा उग्रशेखरा सिद्धसिन्धुः इति त्रिकाण्डशेषः। स्वर्गसरिद्वरा, मन्दाकिनी जान्हवी, पुण्या समुद्रसुभगा, स्र्वनदी, सुरदीध्रिका सुरनदी, जेष्ठाजन्हुसुता भीष्मजननी, शुभ्रा, शैलेन्द्रजा, भवायना इति शब्दरत्नावली। एवमेव वाचस्पत्येऽपि। (च० पृ० २४८३) उदक शब्दस्य पर्यायः वारि प्रयोगे दृष्टव्यः। अस्य प्रयोगः यथा गीतामाहात्म्ये-गीता गङ्०गोदकं पीत्वा पुनर्जन्म न विद्यते। इति।

**गङ्०गौघः**—गङ्०गायाः ओघः प्रवाहः। गङ्०गा ओघः इत्यत्र वृद्धिरेचि (पा०सू० ६।१।८८) इत्यनेन आकारस्य ओकारस्य च कण्ठोष्ठ स्थानकस्य स्थाने तथाविध औकारः गङ्०गा शब्दस्य व्याख्याव्युत्पत्तिश्च पूर्वप्रयोगे अस्ति। ओघ शब्दस्य यथा-ओचनमोघः उच समवाये धातोः पृषोदरादित्वात् घः। वेगेऽर्थे मेदिनीकारेण उक्तम् यथा—ओघो वेगे जलस्य च।

**गङ्०गका**—गङ्०गा एव। स्वार्थेकन् ततस्टाप् प्रत्ययः। अभाषितपुंस्काच्चेति (पा०सू० ७।३।४८) वैकल्पिके इत्वे गङ्०गका पाक्षिके गङ्०गाका इति पदद्वयं सिद्धम्। परञ्च कल्पद्रुमे (द्वि० पृ० २८९) त्रयः शब्दाः निष्पन्ना सन्ति। यथा मुग्धवोधमतेन वाच्योऽनुक्त पुंस्कस्य इति सूत्रेण गङ्०गका गङ्०गाका गङ्०गका इति पदत्रयं सिद्धम्। वा ग्रहणमकारस्यापि स्थित्यर्थम् इति मुग्धबोध टीकाकृद् दुर्गादासः।

**गव्यम्**—गोर्विकारो गव्यम्। गोपयर्सोयत् (पा०सू० ६।१।७९) इति विकारार्थे यत् प्रत्ययः प्रातिपदिक संज्ञायां विभक्तिकार्ये गो यम् इत्यवस्थायां वान्तोयि प्रत्यये इति सूत्रेण अवादेशः। तथाचामरः (२।९।५०) गव्यं त्रिषु गवां सर्वम्। (पृ० २५६७) यथा-

**गव्यं नपुंसकेज्यायां रागद्रव्येऽप्यथ स्त्रियाम् ।**
**गो समूहे त्रिलिङ्०गन्तु गोदुग्धादौ च गोहिते।।**

एवमेव वाचस्पत्ये (पृ०२५६७) कल्पद्रुमे (पृ० ३२०) च। कल्पद्रुमे अन्याऽपि व्युत्पत्तिरस्ति यथा- गवि नेत्रे साधु अथवा गवि वाणे साधु गो शब्दाद् यत् प्रत्ययः ततोऽवादेशः।

**गव्यूतिः**—र्गोयूतिः। धातोरधिकरणेक्तिन् प्रत्ययः ऊति यूति इति निपातनाद् दीर्घः। अध्वपरिमाणे (वा० ६।१।७९) च इति वार्तिकेऽवादेशे गव्यूति इति। मार्गपरिमाणाः

तथाचामरः। (२।१।१८) गव्यूति स्त्रीक्रोशयुग्मम् इति। अमरस्य रामाश्रयीटीकायाम् यथा- धन्वन्तर सहस्त्र तु क्रोशः क्रोश द्वयं पुनः। गव्यूतं स्त्री तु गव्यूति गोरुतं गोमतञ्च तत् इति वाचस्पतिः। इति तत्र टीकायामेव। धनुर्हस्त चतुष्टयं द्वाभ्यां धनुः सहस्त्रभ्यां गव्यूति पुंसि भाषितः इति शब्दार्णवः। एवमेव वाचस्पत्येकल्पद्रुमे (पृ० २५६८) च।

**गवाक्षः**—गवां किरणानामक्षीवेतिविग्रहः। अक्ष्णोऽदर्शनात् (पा०सू० ५।४।७६) इत्यच्। पुंस्त्वम् लोकात्। यद्वा गावो जलानि किरणावक्षन्ति व्याप्नुवन्ति एनमनेन वा। अक्षू व्याप्तो संघाते च धातोः अकर्त्र्यर्थे (तदेव ३।३।१९) घञ्। गो अक्षः इत्यत्र अवङ्० (तदेव ६।१।१२३) स्फोटायनस्येति व्यवस्थिविभाषया अवङदेशे अनुबन्धलोपे दीर्घे कृते गवाक्षः। अत्रामरः (२।२।९) वातायनं गवाक्षः। एतादृशी एव व्युत्पत्तिः वाचस्पत्ये (सृ० २५२३) कल्पद्रुमे (द्वि० पृ० ३१९) च। तत्र कल्पद्रुमेऽन्येऽपि अर्थास्सन्ति संकलिताः यथा- वधू दृगयनम्, जालम्, इति कोशान्तरम् इति भरतः। मेदिन्याम् (१६८।३५) वानर विशेषे यथा- गवक्षो वाक्षके कपौ इति।

**गवेन्द्रः**—गवाम् इन्द्रः स्वामीश्रेष्ठो वा। गो इन्द्रः इत्यवस्थायां (पा०सू० ६।१।१२४) इन्द्रे चेत्यवङि० गुणे च कृते निष्पद्यतेऽयं शब्दः। श्रेष्ठे गवि इति वाचस्पत्यम्। (पृ० २५६७)

**गवयी**—गलकम्बलशून्ये मृगभेदे। जातौ गौरादित्वात् वा ङीष्। गवयस्त्रीत्यर्थः। तथा च कल्पद्रुमे(द्वि० पृ० ३१९) वन धेनुः भिल्लगवी इति राजनिर्घण्टः। प्रायएवमेवान्यकोशेषु।

**गर्धप्**—गदर्भमाचष्टे इति विग्रहे णिचि तदन्तान् कर्तरि क्विपि तस्य सर्वापहारे णेरिणिटि (पा०सू० ६।४।५१) इति णिलोपे गर्दभ् इति। तस्मात् सौ एकाचोवशोभष् (तदेव ८।३।३७) इति दस्यभष्भावेसुलोपे भकारस्य चर्त्वे गर्धप् इति। गर्द शब्दे धातोः कृशुशलि कलि इत्युणादिना (उ० ३।१२२) अभ् च प्रत्यये गदर्भ शब्दोनिष्पद्यते। गर्दभ शब्दोच्चारिता।

**गार्गी**—गर्गस्यापत्यं स्त्री गर्गादिभ्यो (पा०सू० ४।१।१०५) यञ् प्रत्यये यञोश्चेति (तदेव ४।१।१६) ङीप्। ततो हलस्तद्धितस्येति (तदेव ६।४।१५०) यकारलोपः। एवमेव वाचस्पत्ये (च० पृ० २५८५) कल्पद्रुमे (द्वि० पृ० ३२७) च। तथा हरिवंशे (१७६।१४) ह्रीं श्रीं गार्गी श्च गान्धारीं योगिनीं योगदां सदा इति।

**गीः**—गृ धातोः क्विप् प्रत्ययः। इत्वे रपरत्वे दीर्घे सौ विभक्तौ गीः। वाणीत्यर्थः एवमेव कल्पद्रुमे। (द्वि० पृ०३५९)

**गुम्फितः**—गुन्फ धातोः कर्मणि क्त प्रत्ययः इडागमः नस्यानुस्वारे परसवर्णे च कृते

रुपमिदम् । अत्र कल्पद्रुमः (तदेव ३३९) ग्रन्थितः इत्यमर टीकायां रायमुकुटः। एवमेव वाचस्पत्ये (च०पृ० २६१३) अस्य प्रयोगः यथा-न्यायसिद्धान्तमुक्तावल्याम् मङ्०गलाचरणे-

**स द्रव्या गुणगुम्फिता सुकृतिनां सकर्मणां ज्ञापिका,**
**सत्सामान्यविशेषनित्यमिलिता भावप्रकर्षोज्वला।**
**विष्णो र्वक्षसि विश्वनाथ कृत्तिना सिद्धान्तमुक्तावली।**
**विन्यस्ता मनसो मुदां वितनुतां सद्युक्तिरेषा चिरम्।।इति।।**

**गृहपत्नी–**गृहस्य पतिः। इत्यत्र विभाषा (पा०सू० ४।१।१।३४) स पूर्वस्येति वैकल्पिके नकारादेशे ततः ङीष्। नकारादेशाभावे गृहपतिरेव। गृहपति शब्दस्य व्याख्या यथामरे (२।८।१५) सत्स्त्री गृहपतिः समौसदा अन्नादि दानकर्तृक गृहस्य संज्ञा। मेदिनीकरेणात्र (६८।१९७) यथा-

**भवेत् गृहपतिः पुंसि गृहस्थोऽपि च मन्त्रिणे।**

एवमेव कल्पद्रुम (च० पृ० २६५७) वाचस्पत्यादिषु।(४।१।४२)

**गोणी–**शणादिगुणाद् जातः गोणः। निपातनाद्रुकारस्य गुणः। गोण शब्दादावपनेऽर्थे जानपदीति (पा०सू० ४।१।४२) ङीष् प्रत्ययः। अत्र वाचस्पत्यम् (च० पृ० २६९५) धान्याधारे (गुण) ख्याते आवपनपात्रे छिद्रवस्त्रे शाण्यां द्विशूर्पात्मिकम्मान भेदे द्रोणी परिमाणे चार्थेषु। एवमेव कल्पद्रुमे।(द्वि० पृ० ३५५)

**गोपी–**गोपस्य स्त्री। पुंयोगदाख्यायामिति (पा०सू० ४।१।४८) ङीष् प्रत्ययः। अत्रामरः (२।४।१२२) गोपी श्यामा शारिवा स्यादनन्तोत्पलशारिवा इति। एवमेव वाचस्पत्यादिषु। (च० पृ० २७११)

**गोपालिका–**गोपालकस्य गौरक्षकस्य स्त्री ङीष् प्राप्ते पालकान्तान्नेति निषेधे अतष्टापि अत इत्वम् तथा च वाचस्पत्यम् (२। ७११) आभीरपत्न्याम् शारिवोषधौ च शब्दार्थ चि०। गवां रक्षणान्तस्य तथात्वं कीटभेदे इति हेमचन्द्रः। एवमेव कल्पद्रुमादिषु।(द्वि० पृ०३५८)

**गोवाली–**औषधविशेषे रुढः।

**गोमान्–**गोमानिवाचरतीति गोमन्तमिच्छतीति वा। गावः सन्ति अस्येति वा प्रभूतगोयुक्तः।

**गोरट्–**गवां रक्षतीति। रक्ष पालने धातोः क्विपि सुलोपः ककारलोपः अस्य जश्त्वे चर्त्वाविकल्पः।

**गौः–**गम्यते ज्ञायते स्पर्शसुखमनेन। गम् धातोर्डोः। अत्र कल्पद्रुमः (द्वि०पृ० ३७०) गच्छति निम्नदेशमिति कर्तरि डो प्रत्ययः। जलमर्थः। मेदिन्यायां (२१।१) यथा–

गौ स्वर्गे च बलिवर्दे रश्मौ च कुलिशे पुमान्। स्त्री सौरभेयी दृग्वान दिग्वाग्भूष्वप्सुभूम्नि च।

**गौरी**—गौरो वर्णोऽस्त्यस्याः गौरादित्वात् ङीष् प्रत्ययः। पार्वती। तथा च मेदिनी (तदेव १२४।२७-२९)–

**गौरः श्वेतेऽरुणे पीतेविशुद्धे चाभिधेयवत्।**
**ना श्वेत सर्षपे चन्द्रे न द्वयो पद्मकेशरे।।**
**गौरी त्वसंजातरजः कन्या शङ्०करभार्ययोः**
**रोचनीरजनीपिङ्०गप्रियङ्०गुवसुधासुच।।**
**आपगाया विशेषऽपि यादसां पति योषिति।।**

अस्य व्याख्या कात्यायनी प्रयोगेऽपि दृष्टव्याः।

**ग्रामणी**—ग्रामं नयति। णीञ् प्रापणे धातोः सत्सू (पा०सू० ३।२।६१) - इति क्विप् प्रत्ययः। अत्रामरः (३।३।४९)

ग्रामणीनापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु।

विश्वे यथा (५३।७५)–

**ग्रामणीर्भोगिके पत्यौ प्रधाने नापिते च।**
**ग्रामणीः नीलिकायाञ्च ग्रामेयी पण्ययोषितोः।।**

मेदिन्या (४८।४६) यथा-

**स्याद् ग्रामणीः प्रधानेऽधिपतौ त्रिषु**

नापिते पुंसि ग्रामीण्या नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत्। विष्णु इति वाचस्पत्यम् (च० पृ० २७ ४३) यथा विष्णुसहस्रनाम्नि -

अग्रणीर्ग्रामणी श्रीमान् इति।

एवमेव कल्पद्रुमादिषु। (द्वि० पृ० ३८४)।

**ग्लौः**—ग्लापयति। ग्लै हर्षक्षये धातोः ग्लानुदिभ्यां (उ० २।६४) डौः इति डौ प्रत्ययः। चन्द्रः। तथा चामरः (१।३।१३-१४)

**हिमांशुश्चन्द्रमाश्चन्द्रः इन्दुः कुमुदबान्धवः।**
**विधु सुधांशुः शुभ्राशुंरोषधीशो निशापतिः।।**
**अव्जौजैवातृकः सोमो ग्लौर्मृगाङ्०कः कलानिधिः।**
**द्विजराजः शशधरो नक्षत्रेशोक्षपाकरः।।**

(वाच० च० पृ० २८०१) यथा - ग्लौ धरण्यां निशापते इति। एवमेवान्यकोशेषु।

**घृतस्पृक**—घृतं स्पृशति। स्पृश, धातोः क्विन् प्रत्ययः। प्रातिपदिकसंज्ञायां सौ तस्य लोपे षत्वे जश्त्वे वैकल्पिके चर्त्वे घृतस्पृक् घृतस्पृग्। एवमेव वाचस्पत्ये।(३।२।१०१)

**च**—अव्य चन्दति। चदि आह्वाने रोदने च धातो अन्येभ्योऽपि (३।३।२४१) दृश्यते इति ड प्रत्ययः। (मेदि० २७।१७९) –

**चान्वाचय समाहारेतरेतरसमुच्चये।**

मेदिन्यां यथा- चश्चण्डेशो पुमानुक्तः कच्छपे चन्द्रचौरयोरिति। कल्पद्रुमे (द्वि० पृ० ४०९) निर्बीजे दुर्जने चार्थेस्तः।

**चटका**—चटतिभिनति धान्यादिकं चुञ्चपुटेनेति चटभेदे धातोः क्वुन् प्रत्ययः। कल्पद्रुमकार (४१७) मते पचाद्यच् ततः स्वार्थे कन् प्रत्ययः चटकशब्दाट्टाप्। (पा०सू० ४।१।४) अत्रामरः (२।५।१८) -

घटकः कलविङ्०कः स्यात् तस्य स्त्री चटका इति। एवमेव वाचस्पत्यादिषु।( च० पृ० २८४७)

**चक्र्यत्र**—चक्री अत्र इत्यत्र इकोऽसवर्णे शाकल्यस्यह्रस्वश्चेति (पा० सू० ६।१।१२७) सूत्रेण ह्रस्वसमुचितप्रकृतिभावे चक्रि अत्र इति। पाक्षिके यणि चक्र्यत्र। चक्रमस्ति अस्य अस्मिन् वा इति चक्री। अस्मिन्निति अत्र। सप्तम्यास्त्रल् प्रत्ययः। चक्र शब्दस्य व्याख्या अमरे (२।८।८६) यथा चक्रं रथाङ्०गम् (तदैव) सेना अर्थेप्यस्ति यथा ध्वजिनीवाहिनीसेना पृतना नीकिनीचमूः। वरुथिनी बलं सैन्यं चक्र चानीकमस्त्रियाम्। (अम० २।८।७८) चक्रं राष्ट्रेऽपि (अम० ३।३।१८२) चक्रपक्षी अर्थः। यथा कोकश्चक्रश्चक्रवाको रथाङ्गाह्व नामकः। चक्रं सुदर्शनास्त्रं मनस्तत्वात्मकमिति यावत् अस्यास्तीति। विष्णु। प्रायः अन्येषामपि कोशकाराणामिदमेवमतमस्ति। यथा महाभारते- अरोद्रः कुण्डलीचक्री विक्रम्यूर्जित शासनः। चक्रवाक पक्षिणे चक्रं चक्राकाराचिन्हविशेषोऽत्यस्य इति व्युत्पत्तिः चक्रं घटादि निर्माण करणक यन्त्रविशेषः सोऽस्त्यस्य कुलालः। चक्रं फणः अस्त्स्य इति सर्पः सूचकः। इति व्युत्पत्त्यः कल्पद्रुमे एव तत्रैव शब्दरत्नवल्याम् अजः तैलकः इत्यप्यस्ति चक्रवर्ती इति हेमचन्द्रः। चक्रमर्हः व्यालनखः काकः खरा इति राजनिर्घण्टः कुलाल तैलिकराजचक्रवत्थाथिर्थे प्रमाणम् यथा आर्य सप्तसत्याम् (आर्य०सप्त० ५९२)–

**स्नेहमयानि पीडयतः किं चक्रेणापि तैलकारस्य।**
**चालयति पार्थिवानापि यः स कुलालः परमचक्री।।**

चक्र विशिष्टे त्रि० चक्रयुक्त रथादियानरुढः यथा- मनुः (३।१३८)–

चक्रिणोदशमीस्थस्य रोगिणा भारिणः स्त्रियः इति चक्रिणः रथ्यादियानरुढस्येति तट्टीकायां कुलूकभट्टः।

**चटकका**—चटका शब्दात् स्वार्थे कन् प्रत्ययः उदीचामातः (पा०सू० ७।३।४६)– इति पक्षे इत्वाभावः। इति कल्पद्रुमः।( प्र०पृ० ४७१)

**चण्**—अयं चेदर्थे णित् स्वरेविशेषः। चण् क्विप्। इति वाचस्पत्यकार (प्र०पृ० २८४८) मतम्।

**चतुर**—चतेरुरन् प्रत्ययः। संख्यावाचीवहुवचनान्तः। चत्यते याचते इति। चत धातो मन्दिवशि (उ० १।३८) इत्युणादिना उरच् प्रत्ययः। अत्र वाचस्पत्यम् (च०पृ० २८६२) चतुः संख्यायां चतुः संख्याविन्ते च। चतुर् चतुर्वा अव्ययम्। एवमेव कल्पद्रुमादिषु। (प्र०पृ०४१९)

**चतुर्मुखः**—चत्वारि मुखानि यस्य यद्वा। चत्वारोवेदाश्चत्वारिमुखानि यस्य। ब्रह्मेत्यर्थः। यथा रघुः (रघुः १०।२२) -

**चतुर्वर्गफलज्ञानम् कालावस्थाश्चतुर्गुणाः।**
**चतुवर्णमयोलोकः त्वतः सर्व चतुर्मुखात्।।**

चतुर्मुखोरसः औषदिभेदे भवति। ब्रह्मण पर्यायः तत्रैव द्रष्टव्यः।

एवमेव वाचस्पत्यादिषु।( प्र०पृ० २८७७) मुख शब्दस्यव्याख्या चन्द्रमुखी शब्देऽवलोक्या।

**चतुरहायणी**—चत्वारोहायनाः यस्याः ङीष् (पा०सू० ४।१।२७) प्रत्ययः। अत्रामरः-

चतुरका चतुरहायानी

प्रायः अन्येषामपि कोशकाराणामयमेवाभिप्रायः।

**चन्दलिप्ता**—चन्दनेन लिप्ता। चन्दनालिप्ताङ्०गनेत्यादि।

**चन्द्रमुखी**—चन्द्र इव मुखं यस्याः। स्वाङ्०गाच्चोपसर्जनादसंयोगोपधादि ति वैकल्पिके ङीष् प्रत्ययः। पाक्षिके चन्द्रमुखेति। चन्द्रशब्दस्य व्युत्पतिर्यथा-चन्दयति आह्लायति, चन्यति दीयते वेति। मुखशब्दस्य यथा- खन्यते अनेन तनु अवदारणे धातोः ङि०त् खेर्मुट् चोदतिः इत्यच् स च डि०त्वातोर्मुडागमः।

**प्राक् खनोमुडुदातश्च ततोऽच्च प्रत्ययो भवेत्।**
**प्रजासृजा यतः खातं तस्मादाहुर्मुखं बुधाः।।** इति निरुक्तम्।

**चिरण्टी**—चिरेणाटतीति पितृगेहात् भर्तृगेहमित्यर्थे अच् प्रत्ययेन निपातनात् साधुः।– ङीप् (पा०सू० ४।१।२०) प्रत्ययः। अथवा चरति बाहुलकादण्ट प्रत्यये चरण्टी इत्येके। यद्वाचिरिणोति इति चिरण्टी। तथा चामरः (२।६।९) चिरण्टी तु सुवासिनी एवमेवमेदिन्यां (३६।४२) यथा। चिरण्टी तु सुवासिन्यां स्याद् द्वितीयवयः स्त्रियाम्। एवमेवकल्पद्रुमेवाचस्पत्ये (वाच० पृ० २९५२) च।

**चिरम्**–अव्य०। चि धातोः रमुक् प्रत्ययः। चिरार्थम् चिरकालार्थम् तत्पर्यायाः यथा कल्पद्रुमे (द्वि० पृ०४५३) चिराय, चिररात्राय, चिरस्य चिरात् चिरेण इति हेमचन्द्रः। एवमेव वाचस्पत्ये। (च० पृ० २९५२) तद्यथा रघुः (३।६२)-

**तथापि शस्त्रव्यवहार निष्ठुरे विपक्षभावे चिरमस्य तस्थुषः।**

**चेत**–अव्य० चेतसि। चिती सञ्ज्ञाने धातोः विच् प्रत्ययः। अत्रामरः (३।४।४२) पक्षान्तरे चेद्यदि च एवमेवकल्पद्रुमे (द्वि० पृ० ४५९) वाचस्पत्ये (च० पृ० २९६२)।

**चक्षुः**–चष्टे पश्यति, चक्षतेऽनेन वा। चक्षेः शिच्च (उ० १।११९) इत्युसि प्रत्ययः। नेत्रमर्थः तथाचामरः (२।६।९३) लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी, दृग्दृष्टी च। कल्पद्रुमेऽन्येऽप्यर्थास्सन्तिसङ्०कलिता। यथा- अम्बकं दर्शनमिति हेमचन्द्रः। तपनमितिराजनिर्घण्टः। विलोचनम् दृशा वीक्षणम् प्रेक्षणम् दैवदीपः, देवदीपः, दृशिः, दृशी इति शब्दरत्नावली। इति कल्पद्रुमे तत्रैव।

**जय्यम्**–जेतुं शक्यं जय्यम्। जि जये अभिषवे वा धातोः शकि लिङ० (पा०सू० ३।३।१७२) च। इति शक्तौ अचोर्यत् (पा०सू० ३।३।९७) प्रत्ययः। क्षय्य जय्यौ शक्यार्थ (पा०सू० ६।४।८१) इति निपातनात् यान्तादेशः। तथाचामरः (२।८।४४) जय्यो यः शक्यते जेतुः। इति।

**जरा**–जीर्यतेऽनया जृष् वयोहानौ धातोः षिद्भिदादिभ्योऽङ् (पा०सू० ३।३।१०४) वृद्धावस्था। तथा चामरसिहेनोक्तं (२।६।४१) विस्तस्रा जरा एवमेववाचस्पत्ये (च० पृ० ३०५८) कल्पद्रुमे (चि० पृ० ५१७) च। पूर्वविप्रतिषेधेन शीभावं कृत्वा सन्निपात परिभाषाया अनित्यतामाश्रित्य जरसी इति केचिदाहुः। तन्नि मूलम्। यथा–

**कृतान्तस्य दूती जरा कर्णमूले समागत्यवक्तीति लोकाः श्रृणुध्वं।**
**परस्त्री परद्रव्यवाञ्छा त्यजध्वं, भजध्वं रमानाथपदारविन्दम्।।**

**जानपदी**–जानेन उत्पत्या पद्यते। पद् धातोः अप् प्रत्ययः। जने लोकमात्रे। जन- पद एव स्वार्थे अण् । जनपदे भवो वा। जनपदादागते वा। वृ त्तिः जीविका गम्या चेत् जानपदकुण्डगोण (पा०सू० ४।१।४२) इत्यादि सूत्रेण डीष् प्रत्ययः अन्यत्र डीप् स्वरे भेदः नियमपक्षे टाप् इति। एवमेव वाचस्पत्यादिषु।(च० पृ० ३११२)

**जीविका**–जीवतात्। जीव धातोः आशिषि च इति वुञ् प्रत्ययः तस्य अकादेशः टाप् प्रत्यय प्राप्तस्येत्वस्य आशिषिवुनश्च (वा० ४५२८) न इति वार्तिकेन निषेधः। जीविकः शब्दस्य व्याख्या कोशेषु ण्वुलप्रत्यये कृते भवति।

**जीवसे**–अव्य० जीवप्राणने धातोः तुमर्थे सेसेनसे (पा०सू० ३।४।०९) इत्यादिना असे प्रत्ययः। कृन्मेजन्तः (तदेव ५।१।३९) इति अव्ययत्वम्।

**जेयम्**–जेतुं योग्यम् अर्हे कृत्य तृचश्च (तदेव ३।३।१६९) इति योग्यतायाम् अचोयत् (तदेव ३।१।९७) इति यत् प्रत्ययः गुणश्च। तथाचामरः (२।८।७४) जयेजेतव्यमात्रके एवमेव कल्पद्रुमादिषु। (द्वि० पृ०५४३)

**ज्येष्ठा**–अतिशयेन प्रशस्ता। अतिशायने तमविष्ठनौ (पा०सू० ५।३।५५) इति इष्ठन् प्रत्ययः। ज्यसि (तदेव ५।३।६१) च इति प्रशस्य ज्यादेशः टाप्। तथा च मेदिन्यां (मे० ३९।५-६) जेष्ठे श्रे ष्ठे च वृद्धे च त्रिषु मासान्तरे पुमान् ज्येष्ठा च गृहगोधाख्य जन्तुनक्षत्र भेदयोः। अमरसिंहेन (३।३।४१) यथा- त्रिषु ज्येष्ठेऽतिशास्तेऽपि। इति।

**ज्योक्**–अव्य० ज्यो उकन् प्रत्ययः। वाचस्पत्ये (वाच०प०पृ०३१६२) एतेऽथा स्थिताः काल भूयस्थे प्रश्ने शीघ्रार्थे सम्प्रत्यर्थे शब्दार्थचिन्तने उज्वलत्वे च।

**ज्ञातृ**–जानाति ज्ञा धातौः तृन् (पा०सू० ३।२।१३५) प्रत्यय तथा चामरः (३।१।३०) ज्ञातानुविन्दुरः विन्दुः इति।

**ज्ञानम्**–ज्ञा धातोः भावे ल्युट प्रत्ययः। विशेषणेन सामान्येन चाववोधः। तथा चामरः (१।५) मोक्षे धी ज्ञानमन्यत्र विज्ञान शिल्पशास्त्रयोः। वाचस्पत्यो (तृ० ३१५०) यथा- वेदान्तमते पदार्थग्राहिकाया मनोवृतौ। सम्यक्बोधे। न्यायमते बुद्धिमात्रे, शुद्धिवृत्तिनिरोधरूपे योगे। देवताध्यानादौ, विवेक विज्ञाने शास्त्राचार्यपदेश जे परात्माविशेषे साक्षन्मोक्षफले आत्मनिश्चये तत्व ज्ञानेवेदान्तिमते जीवेश्वरजगद्भेदे भ्रमाधिष्ठानभूते नित्यस्वप्रकाशे सच्चिदानन्दरूपा द्वितीयेपरमार्थ सत्ये चैतन्ये, आत्मानात्मसर्व-पदार्थावाबोधनविवेक सामर्थ्ये, अहं ब्रह्मेत्युपासने, साङ्०गवेदतदर्थविषयाबोधे महावाक्यजन्याखण्डकाराया, बुद्धिवृत्तौ, स्वस्वरूपस्फुरणे। सांख्यमते गुणपुरुषान्यताख्यातिरुपे।

**तट्टीका**–तस्य टीका। तद् टीका इति स्थिते दस्य ष्टुत्वे चर्त्वे प्रयोगः साधुः। टीकतेऽर्थो यया टीकृ धातोः गुरोश्चहलः (पा०सू० ३।३।१०५) इत्यप्रत्ययः। टाप्। टीका पदस्य व्युत्पत्तिरियं प्रायः सर्वैः कोशकारैसम्मता।

**तथाहि**–अव्य०। अत्र वाचस्पत्यम्। (च०तृ०३२१५) निदर्शने प्रसिद्धमेवेत्यर्थः। उक्तार्थे दृढीकरणे च अयं शब्दः।

**तन्मात्रम्**–तत् प्रमाणं यस्य तत्। प्रमाणे मात्रच् प्रत्ययः। तत् मात्रम् इत्यत्र प्रत्यये भाषायां नित्यमिति वार्तिकेन अनुनासिकत्वम्। यद्वा सामात्रा यस्य। अत्र कल्पद्रुमः (पा०सू० ५।३।३७) अप ञ्चीकृतरूपरसगन्धस्पर्शशब्दानां संज्ञा अन्येऽपि कोशकाराअर्थेऽस्मिन् सम्मतास्सन्ति।

**तवौष्ठः**—तव ओष्ठ रित्यवस्थायां वृद्धिः। युष्मद् शब्दस्य षष्ठ्येकवचन रूपं तव। उष्यतेऊष्णारोहेण इति ओष्ठः। उष दाहे धातोः उषिकृषि (वार्तिक ५।१७) इत्युणादिना घन् प्रत्ययः। षत्वादिकार्यम्। अस्य पर्यायवाचिनः शब्दाः अधर प्रयोगे द्रष्टव्याः।

**तरुणी**—तरति। तृ प्लवनतरणयोः धातोः ओरश्च (उ०।२।४) लो वा इत्युनन् प्रत्ययः वयसि (पा०सू० ४।१।२०) इति ङीष्। अत्रामरः (२।६।८) तरुणी युवती सगे। तरुणी तलुनीति च शब्दभेदः। तथा च मेदनीकारणोक्तम्। (८७।७०) तलुनः पवने यूनि युवत्य तलुनी स्मृता। वाचस्पत्येचान्येऽपि (च० पृ० ३२५२) पर्यायवाचिनः शब्दास्सन्ति यथायूनी दिनकरी, धनिका, धनीका, इति शब्दरत्नावली। गृहकन्या दन्तीवृक्षः चीड़ानामगन्धद्रव्यम् पुष्पविशेषः।

**तादात्म्यम्**—तदात्मनो भावः। तदात्मन् शब्दात् ष्यञ् प्रत्ययः आदिवृद्धिः टिलोपश्च। अभेद सम्बन्धः तत्स्वरूपमिति न्यायशास्त्रम्। एवमेव वाचस्पत्ये (३२६७) कल्पद्रुमे (द्वि०पृ० ६०५) च!

**तादृक्**—त्रि०। स इव दृश्यतेऽसौ सदृश् इत्यत्रत्यदादिषु दृशेरन (पा०सू० ३।२।६०) इति क्विन् प्रत्ययः। आसर्वनाम्नः (तदेव ६।३।९१) इति आत्वम् । तादृशोऽर्थः। एवमेवकल्पद्रुमे। (पृ० ६०३)

**तावत्**—तत् परिमाणमस्य तद्धिताः (पा०सू० ४।१।७६) इति बहुवचनेन वाक्येऽनुक्ता अपि तद्धिता ज्ञापिताः तेन डावतु प्रत्ययः अत्रामरः (३।३।२४६) यावतावच्च साकल्येऽवधौ मानेऽवधारणे इति। प्रायः एवमेवान्येषामपि कोशकारणामभिप्रायः। अत्र किञ्चित् विचार्यते। यत्त देतेभ्यः (पा०सू० ५।२।३९) इति सूत्रस्य डावतार्थ वैशिष्ट्यानिभवेशः पृथगुच्यते इति भाष्य प्रतीकमादाय यावत्तावादित्यान्यासन वतुप् प्रत्ययं कृत्वा आसर्वनाम्नः (तदेव ६।३।९१) इत्यात्वविधानस्य कैयटेन स्पष्टमुक्तंतवेदं वचनं न सम्यक्। डावतु प्रत्यस्य विधानन्तु प्राचां सम्मतमित्यपि तत्रेव कैयटेनोक्तम्। इति अमरकोशस्य रामाश्रयीटीकायां टिप्पणौ तावत् शब्दे।

**तित्तरिः**—इतो मनुष्य जातेरित्यत्र मनुष्य पक्षित्वान्नङीष्। तित्ति शब्दं राति। बाहुलकात्किप्रत्ययः। तथाचामरेण (२।५।३५) व्याख्यातम् - तेषां विशेष हारीतो मद्गुकारण्डावा प्लवः। तित्तिरिः कक्कुमो लावो जीवं जीवश्चकोरकः। कोयष्टिकांष्टट्टिभको वर्तको वर्तिकादयः। इति। एवमेववाचस्पत्ये (पृ० ३२९०) कल्पद्रुमे। (पृ० २१६) च। तथाचान्येष्वपि कोशेषु।

**तिरस्**—अव्य०। तृ धातोरसुन् (उ० ४।१८९) प्रत्ययः। अत्रामरः (३।३।२५६)

तिरोऽन्तर्धो तिर्यगर्थे। अन्यदपि अमरे (३।४।६) तियगर्थे साचि तिरोऽपि। तिरस्कारः अर्थः। प्रायः सर्वे कोशकाराः एष्वर्थेषु सम्मता सन्ति।

**तिर्यक्**–तिरः अञ्चतीतिविग्रहे क्विन् प्रत्ययः, न लोपः तिरः तिरि आदेशः यण् कुत्वम्। अत्रामरः (३।१।३४) स तिर्यङ्०यस्तिरोऽञ्चति। अन्येषामपि कोशकाराणामयमभिप्रायः। तिरस् प्रयोगेऽस्य पर्यायवाचिनः सन्ति।

**तुङ्०गनासिका**–तुङ्०गा उन्नता चासौ नासिका। इत्यत्र नासिकोदर (पा०सू० ५।१।५५) इत्यादि सूत्रेण वैकल्पिके ङीषि प्रत्यये पाक्षिके टापि तुङ्०गनासिका इति।

**तुराषाट्**–तुतोर्ति इति तुरः। तुरत्वरणे धातोः इगुपधत्वात् क प्रत्ययः तुरं वेगवन्तं साहत्यभिर्भवति। ण्यन्तात् सहे क्विप् (तदेव ३।२।२६) सहेः साडः (तदेव ८।३।५६) सः इति षत्वम् अन्येषामपि (तदेव ६।३।१३७) इति दीर्घः। आङ्० प्रश्लेषो वा। न हि वृतिवृधि (तदेव ७।३।११६) इति वा दीर्घः। एकदेशविकृतस्यान्यत्वात्। दीर्घ विधौ (वा० १।१।५८) इति क्विलुगिति वा। इन्द्रोऽर्थः।

अस्य पर्याय वाचिनः इन्द्र शुद्धे द्रष्टव्याः।

अन्येषामपि कोशकारणामिदमेवमतम्।

**तूष्णीम्**–तोषणम्। तुष् तुष्टौ धातौः बाहुलकान्नीम्। अत्रामरः (३।४।९) मौने तु तूष्णीं तूष्णीकम् इति। अन्येषामपि कोशकाराणा मयमेवाभिप्रायः।

**तृतीय**–त्रयाणां पूरणः। तीयते सम्प्रसारण (पा०सू० ५।२।५५) श्च। कल्पद्रुमादिषु (द्वि० पृ० ६४३) अपि ईदृश्येव व्युत्पत्तिः। यथा मनुः (२।३५)

**चूड़ाकर्मद्विजातीनां सर्वेषामेव धर्मतः।**
**प्रथमे वातृतीये वा कर्तव्यं श्रुतिचोदनात्।।**

**तोयम्**–तवतेर्वृद्धिकर्मणः यत् प्रत्ययः। तुद् धातों यत् प्रत्यये निपात नाद दकारलोपे गुणः। यदा तुदिः सौत्र आवरणार्थः तस्माद्यत् प्रत्यये गुणादिकृते विभक्ति कार्ये तोयममिति। अत्र यकारस्य पदान्तत्वाभावात् ओतो गार्ग्यस्ये (पा०सू० ८।३।२०) तियकारलोपः। अस्य पर्यायः अम्बुशब्दे अवलोक्यः।

**त्रिफला**–त्रयाणां फलानां समाहारः अजादि गणेपाठत्वात् द्विगो (तदेव ४।१।२१) इति न ङीप्। अत्र कल्पद्रमे। (द्वि० पृ० ६६०) त्रिफली, फलत्रयम् फलेत्रियम्। मिलितसमभाग हरीतकी विभीतकामलकी फलानि। इति। अन्येषामपि कोशकाराणामयमभिप्रायः। यथा भावप्रकाशे-

**पथ्याविभीत धात्रीणांफलैः स्यात् त्रिफलासमैः।**
**फलत्रिकञ्च त्रिफला सा वरा च प्रकीर्तिता।**
**त्रिफला कफपित्तघ्नी मेह कुष्ठ हरा सरा।**
**चक्षुष्यादीपनीरुच्या विषमज्वरनाशिनी।।**

एतत् सर्व तत्रैव कल्पद्रुमे।

**त्रिलोकी–**त्रयाणां भूर्भुर्वस्वर्लोकानां समाहारः। द्विगोः (पा०सू० ४।१।२१) इति ङीप् प्रत्ययः। एतादृशी व्युत्पत्तिः शब्दकल्पद्रुमादिषु। (द्वि० पृ० ६६१) तथा च श्रीमद्भागवते (१।५।७) त्वं पर्यटन्नर्क इव त्रिलोकी मन्तश्चरोवायुरिवात्मसाक्षी इति।

**त्रिहायनी–**त्रयोहायना यस्याः दामहायनान्ताच्चेति (पा०सू० ४।१।२७) ङीप् प्रत्ययः। प्रायः सर्वेषां कोषकाराणामिदमेव मतम्। त्रिवर्षीया।

**त्वै–**अव्य० विशेषतर्कयोः।

**दण्डी–**दण्डः अस्ति अस्येत्यर्थे इनि प्रत्ययः (तदेव ५।२।११५)। वाचस्पत्ये (प०पृ०३५०१) अस्य वहवः पर्यायवाचिनः शब्दा सन्ति सङ्०कलिताः यथा यमः, इति हेमचन्द्रः। नृपः द्वारपालः, मञ्जुघोषः, रविः, पार्श्वचरभेदः इति शब्दार्थ चि०। जिनभेदे इति त्रिका०। दमनवृक्षो इति राजीनि०, चतुर्थाश्रमविशिष्टः काव्यदर्शनग्रन्थकर्ता, कवि भेदे च। दण्डधारके त्रि० धृतराष्ट्रपुत्रेभेदे दण्डकार शब्दे दृष्टव्यम्। एवमेवकल्पद्रुमादिषु। (तृ० पृ० ६७९)

**दधि–**दधाति इति धा धातोः भाषायां धाञ् कृसृगमिजनिनमिभ्यः (वा० ३।२।१७१) इति वार्तिकोक्त्या किः स च लिड्वत्। अत्र कल्पद्रुमः (द्वि पृ० ६७९) श्रीवासः वसनमिति शब्दरत्नावली। क्षीरोद्रावस्थाभावः। तत् पर्यायः क्षीरजम् मङ्०गलयम्, विरलमिति राजर्कघण्टः। पयस्यम्। धनेतरत् द्रप्शम् इत्यमरः। एतत् सर्वं कल्पद्रमे अन्येष्वपि कोशेस्वयमेव।

**दन्तः–**दमु उपशमो धातोः हशिमृगिणिति उणादिना (उ० ३।८६) तन् प्रत्ययः। अत्रामरः (२।६।९१) रचना, दशना दन्ता रदाः, इति। मेदिनीकारेण (५५।२३) दन्तोऽद्रिक्टके कुञ्जे दशनेअथौषधोरित्रयामिति। शैलसृङ्०गमिति त्रिकाण्डशेषः द्विजः सखरः खरुः इति शब्दरत्नावली। एवमेवान्येष्वपिकोशेषु।

**दर्भमूली–**औषधिविशेषे रुढोऽयं शब्दः। इत्यत्र पात्र (पा०सू० ५।१।६४) कर्णः इति ङीप् प्रत्ययो भवति।

**दशन्–**दंशयति दीयते इति। दन्श दन्शने धातोः बाहुलकात् कनिन् प्रत्ययः नलोपः। संस्थाविशेषः।

**दाक्षी**–दक्षस्य स्त्रयपत्यम्। अत इञ् (तदेव ४।१।९५) इति इञ् प्रत्यय:। तत: इतोमनुष्य जाते: (तदेव ४।१।९५) इति ङीप्। दक्षस्यव्याख्या यथा कल्पद्रुमे (द्वि० पृ०६७०) दक्षते सृष्टि प्रवृद्धयेसमर्थो भवतीति। दक्ष धातो रच् प्रत्यय:। प्रजापति विशेष:। स ब्रह्मणो दक्षिणाङ्०गुष्ठाज्जात:। दक्ष: विष्णोर्नामविशेष:। निघण्टुकारेणात्रै (निघ० २।९।) वमुक्तम्। अक्रूर: पेशलोदक्ष: दक्षिणो क्षमिणां वर:। इति मेदिन्या (१६६।१४) यथा-

**दक्षस्त्रिषु पटौ पुंसि ताम्रचूडे प्रजापतौ,**
**मुनिभेदे, हरवृक्षो द्रुम भेदे स्त्रियां भुवि। इति।।**

वाचस्पत्ये (प०पृ० ३५१३) तु पाणिनिमातरि च दाक्षिशब्द:। अन्ये कोषकारापि एष्वर्थेषु सहमता: सन्ति।

**दात्रम्**–अत्र अनचेति (पा०सू० ८।४।५२) तकारस्यद्वित्वेप्राप्ते दीर्घादाचार्याणामिति (तदेव ८।४।५२) निषेध:। द्यति दाति वानेन। दो अवखण्डने, दाप् लवणे वा धातो: दाम्नीशसेति (तदेव ३।२।१८२) ष्ट्रन् प्रत्यय: दादिभ्यश्छन्दसि त्रन् वा। अस्त्र विशेष: इति भरत:। अत्रामर: (२।९।१३) दात्रलवित्रमिति। वाचस्पत्ये (प० पृ० ३५१४) दानकर्तरि अर्थे। कौमुदीस्थप्रयोग: दात्रेण धान्यंलुनाति। इति।

**दामालिह्**–दाम लेढि। दाम उपपद लिह् धातो: क्विप् प्रत्यय:। अत्रवाचस्पत्यम् (तदेव ३५४३) दामलेढके इति। तमात्मनमिच्छति इति क्यच् प्रत्यय: धातुत्वात् लडादिकार्ये दालिह्यति इति। आत्मनो दामलेहकेच्छौ इत्यर्थ: दादेधातोर्घ: इति पाणिनि दादेरिति विशेषणात् अस्योपदेशे दादित्वम्भवति न घत्वं भवति इति विशेष:।

**दिक्**–दिशति अवकाशं ददाति वा। दिश् अतिसर्जने धातो: ऋत्विग् (पा०सू० ३।२।५९) दधृगिति क्विन् प्रत्यये सर्वापहारी लोप: तत्कार्ये दिगिति दिशेत्यर्थ:। सा च दिशा पूर्वपश्चिमोत्तरदक्षिणादिरूपा। अत्रामर: (१।३।१) ककुप् काष्ठा, हरित आशा इति। कल्पद्रुमे (दि०पृ०७१८) यथा निदेशनीदिशा ककुभ: हरित: गौ: इति शब्दरत्नावली अपि च आता: उपरा:, आष्ठा इति वेदनिर्घण्टौ तत्रैव शेषकोशेष्वप्येवमेव।

**दीर्घाहा**–दीर्घान्यहानि यत्र। निदाघोऽर्थ:। एवमेववाचस्पत्यादिषु। (प० पृ० ३६१५)

**दुग्धम्**–दुह्यते स्मेति। दुह धातो: कर्मणि क्त:। स्त्रीजातिस्तन नि: सृत् द्रव-द्रव्यविशेष:। अत्रामर: (२।९।५०) दुग्धं क्षीरं पय: सममिति। हेमचन्द्रेण (२।२४५) यथा- दुग्धे क्षीरे पूरितम् च। अस्य पर्याय:कल्पद्रुमे (द्वि० पृ० ७१५) यथा संकलिता: क्षीरं पीयूषं ऊधस्यम् स्तन्यं पय: अमृतम् इति राजनिर्घण्ट:। बालजीवनम् इति भावप्रकाश:। प्राय: अन्यकोशेष्वपि एतादृश मेव।

**दुर्गा**–दु:खेन गम्यते ज्ञायतेऽस्याम्। दुरउपसर्गपूर्वकं गम्‌धातोर्ड: सुदुरोरधिकरणे (व० ३।२।४८) इति वार्तिकेन। दुखे गम्यते ज्ञायते असौइति व्युत्पतौ अन्यत्राऽपि दृश्यते इति ड:। दु:खेन दुष्टैवा गीयते स्तूयते इति व्युत्पत्तौ गै शब्दे धातो: आतश्चोपसर्गे (पा०सू० ३।३।१०६) इति अङ्० प्रत्यय:। अस्यामरकोशान्तर्गतपर्यायवाचिन: कात्यायनी प्रयोगे द्रष्टव्या। कल्पद्रुमे (द्वि० पृ० ७२७) संकलितपर्याय: यथा-अपराजिता इति शब्द चन्द्रिका। श्यामापक्षी इति राजनिर्घण्ट:। नववर्षाकुमारी। यथा देवीभागवते (देवीभा० ३।२६।५०)

**नववर्षा भवेद् दुर्गा सुभद्रा दशवर्षिका इति।**

भगवति महात्म्ये तु सर्वत्रैव दुर्गादेव्या: विशेषरुपेण माहात्म्यमस्ति। वाराणस्यामस्सीघटस्य प्रतीच्यां दिशि दुर्गा देव्या: सर्वकामना सिद्धिदं मन्दिरमस्ति। विन्ध्याचले, मध्यप्रदेशे सतनामण्डलान्तर्गत मैहर नामके ग्रामे ऽपि मातु अतिप्रसिद्धे मंदिरेस्त:। एवमेव देशविशेषेष्वपि सर्वत्र दुर्गादेव्या: स्थानानि प्रसिद्धानि सन्ति। भगवत्या दुर्गादेव्यामाहात्म्यम् मार्कण्डेय पुराणे देवीभागवते च विशेष रुपणास्ति।

**दुहिता**–दोग्धि विवाहादिकाले धनादिकमाकृष्य गृह्णाति यद्वा दोग्धि गा इति दुह प्रपूरणे धातो नप्तृनेष्टृत्वष्टृ (उ० २।९६) इत्युणादिना तृच् प्रत्यय: निपातनात् गुणाभाव:। स्वस्रादित्वात् (पा०सू० ४।१।१०) न ङीप्। यद्वा दहति भस्मीकरोति इति। व्युत्पत्या निपातनात् सिद्धि: इति अमरकोशस्य (२।६।२७) रामाश्रयीटीकायाम्। अस्य व्याख्या यथामरे–

**आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी।**

**आहुः दुहितरं सर्वे इति।** प्राय: अन्येष्वपि कोशेषु एवमेव।

तद्यथा भागवते -

**भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः।**

**दृढपतिः**–दृढ: पति यस्य इत्यत्र विभाषा (पा०सू० ४।१।३४) सपूर्वस्य इति सूत्र उतरत्रानुवृत्तयेऽनुवृतस्य अनुपसर्जनात् इत्यस्य श्रुतत्वेन सपूर्वस्य पत्यन्तरयेति विशेषणात् दृढापतियस्येति बहुव्रीहावपि नुकि ऋन्नेभ्योङीप् (तदेव ४।१।५) इति ङीपि अलोपे विभक्तयादिकार्ये जातमुक्तत्वम्।

**दृन्भूः**–दृन् इति हिंसार्थाव्यय: भुव: क्विप् प्रत्यय:। अत: अनुस्वार पर सवर्णो च न भविष्यत:। तरु विशेष:। अत्र मेदनीकारेणोक्तं (१०६।५) यत् दृन्भूस्त्री सर्प चक्रयोरिति। वाचस्पत्ये (प० पृ० ३६७९) सङ्०कलिता अर्था: यथा वज्रे, सूर्ये, इति हेमचन्द्र: नृपे

इति शब्दचन्द्रिका। अत्र दृन्करपुनः पूर्वस्य-इति वार्तिकेन अजादि विभक्तौ यण् भवति। तत्रार्थः कन्दर्पः। कल्पद्रुमे (पृ० ७३९) यथा- दृम्फतीति। एतेषामते अन्दूदृन्भू (उ० १।९५) इत्यादिनानिपातितः। किन्तु अत्र दृन्भवतीति व्युत्पत्तिरेव श्रेष्ठा यतो हि तत्रैव सम्यक्तया अर्थावबोधो भवति।

**दृम्भूः**—दृम्भवतीति दृभी ग्रन्थे धातोः अन्दूदृम्भूजम्बू इत्युणादिना निपातितः कू प्रत्ययः। नस्यानुस्वारेपरसवर्णे च कृते दृन्भू विभक्तिकार्ये दृम्भूः इति ग्रन्थभवनमर्थः। इति कल्पद्रुमः।(द्वि०पृ०३।)

**दृक्**—दृश्यन्तेऽर्थाः अनया इति विग्रहे सम्पदादित्वात् दृशेः क्विप्। ततः सुलोपे व्रश्चेति षत्वमाशङ्०क्य त्यदादिषु इति दृशेः क्विन् विधानादन्यत्रापि कुत्वमिति भावः। अत्र मेदिनी (१६३।८) दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च त्रिषु वीक्षके। इति। एवमेवान्येष्वपि कोशेषु।

**देवेज**—देवं यजते। देव उपपद् यज् धातो क्विप् प्रत्यये सम्प्रसारणे गुणे कृते देवेजिति वाचस्पत्यम्।(प०पृ०३७५१)

**दैत्यारिः**—दैत्य अरिरित्यत्र अकारयोस्थानेसवर्णदीर्घः आकारः। दैत्यानामरिः विष्णुरित्यर्थः। उपेन्द्र शब्दे पर्यायवाचिनः द्रष्टव्या। मेदिनीकारेणैव (१३५।१७०) मुक्तम् - दैत्यारिः पुंसि सामान्यदेवे च गरुडध्वजे। एवमेवमन्येषामपि कोशकारणामभिप्रायः।

**दोः**—दाम्यति अनेन दमु उपशमे धातोः दमोर्डोस् (उ० २।६९) इत्यौणादिक डोस् प्रत्ययःअस्यमत्वे यजादौ तद्धिते च वा दोषन्नादेशः। पुंसि दोः दोषो दोषः क्लीव दोः दोषणी, दोष्णि इत्यादि। भुजेत्यर्थः। तथाचामरः (२।६।८०) भुजबाहु प्रवेष्टो दोरिति। एवमेवमन्यकोशेषु। अस्य प्रयोगः यथा साहित्यदर्पणे दोर्दण्डाश्रितचन्द्रशेखर-धर्नुदण्डावभङ्०गोद्यतः। इति।

**दोग्धा**—दोग्धीति। दुह धातो तृच् प्रत्ययः। अत्र मेदिनीकारः। दोग्धार्थोपजीविकौ वत्सगोपालयाः पुमान् इति। धन्वर्थेऽप्यस्ति। यथा रघुवंशे कालिदासः दोहावसाने पुनरेव दोग्धीम् इति। गीतामाहात्म्ये यथा- दोग्धा गोपाल नन्दनः इति।

**द्य**—अव्य०। हिंसा प्रतिलोम्यपादपूरणेषु।

**द्यौः**—द्यन्ततेऽस्यामिति। वाहुलकात् (पा०सू० ३।३।१) द्युतेः डो प्रत्ययः। अथवा द्यौतिद्युअभिगमने धातोः विच् प्रत्ययः। दीव्यन्ति अस्यामिति। बाहुलकात् सिद्धिः पर्याय यथामरे (अमर० १।१।६)

**स्वरव्यम् स्वर्गनाक त्रिदिव त्रिदशालयाः।**
**सुरलोको द्वौदिवो द्वे स्त्रियाम् क्लीवे त्रिविष्टपम्।।**

अन्यदपि अमरे (तदेव १।२।१) द्यौदिवे दे स्त्रियानमभ्रव्योमपुष्करमम्बरम्। नभोऽन्तरिक्षं गमनमनन्तं सुरवर्त्मखम्। विपद्विष्णुपदं वा तु पुंस्याकाशविहायसी। विहायसोऽपि नाकोऽपि द्युरपि स्यादव्यम्। तारापोऽन्तरिक्षञ्च मेघध्वा च महाबिलम्। विहाया:-शकुने पुंसि गमने पुंनपुसंकम्। एवमेव अन्येष्वपिकोशेषु।

आकाशार्थे यथा महाभारते (महाभारते १७४।८) –

**आदित्य चन्द्रावनिलोऽनलश्च द्यौर्भूभिरापो हृदयं यमश्च।**
**अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्चजानातिनरस्यवृत्तम्।।**

अमरस्य रामाश्रयीटीकायां व्युत्पतिविषये यथा- द्यौरित्यत्र दिवेडार्यो इत्याह मुकुट:। तन्न। उक्त सूत्रस्यादर्शनात्। स्वामी तुद्यो शब्दो ओकारान्तोऽस्ति। गोतोणित् इत्यत्र गोतो णित् इति पाठान्तराम्नात्। इत्याह- तदपि न स्मृत उर्येन स स्मृतौरित्यत्र वृद्धिविधानेन पाठस्योपेक्षणीयत्वात्। यदपि दिवे क्विप् इत्युक्तं तदपि न। दिवौ दिव: इत्यादौ च्छ्वोसूडनुनासिके (पा०सू० ६।४।१९) च इति ऊठ् प्रसङ्०गात्।

**द्वितीया**–द्वयो: पूरणी इतिविग्रहे द्वेस्ती (तदेव ५, २।५४) य: इति तीय: प्रत्यय:। अत्र हेमचन्द्र: (२।५१९) द्वितीया तिथि गेहिन्यो र्द्वितीय: पूरणे द्वयो:। गेहनी भार्यार्थे अमरेणापि (२।६।५) पठिता-पत्नीपाणिगृहीती च द्वितीया सहधर्मिणी। भार्याजायाथ पुम्भूम्निदारा: इति। द्वित्वसंख्या पूरणे तस्या: डित्सुवा सर्वनामकार्य विभाषा द्वितीया (पा०सू० ७।३।११५) तृतीयाभ्यामिति सूत्रेण। पुन्नपुंसकार्थमिदं सूत्रमतस्न त्याज्यम्। पुत्रे तुनित्य पुलिङ्०ग इति त्रिकाण्डशेष:। संख्यार्थे यथा रघुवंशे- द्वितीय गामी न हि शब्द एष न:। अन्येषामपि कोशकारणामेवमभिप्राय:।

**द्विदाम्नी**–द्वे दामनीबन्धन रज्जू यस्या: मनन्तात् ङीपो निषेधे पक्षे डाप: प्राप्तौ दामहायनान्ता (तदेव ४।१।२७) च्च इति ङीबेव (द्विरज्जुवन्धन योग्यायां दुष्टायां स्त्रियां गवि। एवमेव वाचस्पत्यादिषु।(पृ० ३८१९)

**द्विपदा**–द्वौ पादावस्या: संख्यासुपूर्वेति (पा०सू० ६।१।११०) पादस्यान्तलोप: टावृचि (तदेव ४।१।९) इति टापि पाद: पद्भाव:। द्विपादयुक्तायामृचि। वाचस्पत्यकाराणमपि (प०पृ० ३८२०) अयमभिप्राय:।

**द्विपदी**–द्वौ पादौ यस्या: पाद: अन्त्यलोपे पादोऽन्यतरस्यामिति (पा०सू० ४।१।८) वैकल्पिके ङीप् प्रत्यय:। भत्वात् पाद: पद्भाव:। ऋग्भिन्ने द्विपदयुतगी तभेदे मात्रवृत्तिभेदे च।

**द्विपुरुषी**—द्वौपुरुषौ प्रमाणमस्य तद्धितार्थे द्विगुः। प्रामणेलोद्विगो नित्य मिति मात्रचो लुक्। पुरुषस्य प्रमाणयुक्तेस्त्रियां पुरुषात् (तदेव ४।१।२४) प्रमाणेऽन्यतरस्याम् इति वा ङीप्। द्विपुरुषी द्विपुरुषा वा परिखा। एवमेववाचस्पत्यादिषु। (प०पृ० ३८२१)

**द्विहायनी**—द्वौ हायनौ वत्सरौ वयः क्रमोयस्याः। इत्यत्रदामहायणान्ताच्चेति (पा०सू० ४।१।२७) ङीप्। द्विवर्षा गौरित्याद्यर्थः। यथामरः (२।९।६८) द्विहायनी द्विवर्षा गौः इति एवमेवान्येषु कोशेषु।

**द्वयाचिता**—द्वौ अचितौ वहतीत्यर्थे आढचित्रपात्रात् (पा०सू० ५।१।५३) खोऽन्यतरस्याम् द्विगोश्च (तदेव ५।१।५४) इति खठनोरभावे प्राग्वहतीय (तदेव ५।१।१८) ञ। अध्यर्थेति (तदेव ५।१।२८) तस्य लुक्। अनेन द्विगोः (तदेव ४।१।२१) इति ङीपि निषिद्धे टापि द्वयाचिता। आचितशब्दस्यव्याख्या यथामरे (२।९।८७) आचितो दशमाशः स्युः। मेदिन्यां (६०।८९) यथा आचितः शकटोन्मेये पलानामयुतद्वये इति। प्रायः एवमेव वाचस्पत्यादिषु। (वाच० प० पृ० ३८३३)

**द्वयूधनी**—द्वे ऊधसी यस्याः इति विग्रहः। सङ्०ख्याव्याद्यर्थे (पा०सू० ४।१।२६) ङीप् प्रत्ययः अल्लोपश्च। ऊधस् शब्दस्यापीनमर्थः यथामरे (२।९।७३) ऊधस्तुक्लीवमापीनमिति। गौः क्षीराशयः। ऊधस् शब्दस्य व्युत्पत्ति यथा वहति वह प्राणने उनत्ति उन्दीलेदने धातू तयोरसुन (उ० ४।१८९) प्रत्यये ऊधसोऽनङ्० इति निर्देशात् भवति।

**धनम्**—धनति धन धान्ये धातोरच् (पा०सू० ३।१।१३४) प्रत्ययः। वित्तार्थः। यथामरसिंहेनोक्तः (अमर० २।९।९०) द्रव्यं वित्तं श्वपतेयं रिक्थमृक्थं वनं वसु। हिरण्यं द्रविणं द्युम्नमर्थरै विभवा अपि। मेदिनीकारेणानात्र (८३।१२) धनं तु गोधने वित्ते इति उक्तम्। कल्पद्रुमे (द्वि०पृ० ७७६) बहवस्सङ्०कलितार्थास्सन्ति यथा-काञ्चनं लक्ष्मीः भोग्यम् सम्पत् वृद्धिः श्रीः व्यवहार्यम् इति राजनिर्घण्टः। रै भोगः इति जटाधरः। स्वम् इति शब्दरत्नावली। तस्य वैदिक पर्यायाः मद्यम्, रेक्णः रिक्थम् वेदः वीरवः श्वात्रं रत्नं रयिः क्षात्रम् गयः मीलुम् गयः द्युम्नम् इन्द्रियं वसुः रायः रावः भोजनं तना नृम्णं वन्धु मेधाः यशः ब्रह्म द्रविणम् श्वः वृत्रमु वृत्रम् इत्यष्टाविंशति धननामानि। इति वेद निर्घण्टौ तृतीयाध्याये। तत्त्रिविधम् यथा-

**धनन्तु त्रिविधं ज्ञेये शुद्धं शवलमेव च।**
**कृष्ण ञ्च तस्य विज्ञेयः विभागः सप्तधा पृथक्।**
**क्रमायतं प्रीतिदायं प्राप्तञ्च सहभार्यया।**
**अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम्।**

**वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम्।**
**याजनाध्यापने नित्यं विशुद्धञ्च प्रतिग्रहः।**
**त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम्।**
**युद्धार्थलाभं करजं दण्डव्यापहारतः।**
**वैशिषक धनं दृष्टं वैश्यस्यापि त्रिलक्षणम्।**
**कृषिगैरक्षावाणिज्यं शूद्रस्यैवयस्त्वनुग्रहात्।**
**कुसीद कृषि वाणिज्यं प्रकुर्वीत स्वयं कृतम्।**
**आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः।। इति गारुडे।**

अस्मिन् युगे तु सर्वाणि कर्माण्येव अर्थ प्रधानानि सन्ति।

**धनक्रीता**—धनेन क्रीता। अत्र अदन्तत्वाभावात् क्रीतात्करण (पा०सू ४।१।५०) पूर्वादिति न ङीष्। यतो हि टाबन्तप्रकृतिकसुबन्ते नैव सह समासः।

**धनुः**—धनति। धन शब्दे धातोः अतिवृवपि (उ० २।११७) इत्युणादिना उस् प्रत्ययः। सान्तस्य धनुस् शब्दस्यव्याख्यामेदनी (१७१।२६) कारेरैवमुक्तम्। धनुः पुमान् पियालक्षै राशिभेदे शरासने धनुर्धरेत्रिषु इति। भृमृशी इत्युणादिना (उ० १।७) उ प्रत्यये सति उदन्तोऽपि। तस्य व्याख्या मेदिन्यां (८३।११) यथा धनुः पुमान् पियालादौ राशि भेदे शरासने। कृषिचमितानि (उ० १।८०) इत्युणादिना उ प्रत्ययान्ते स्त्रियामपि यथात्रिकांडशेषे (३।८।५०-५१) शरावपोधनुः स्त्रीं स्यात् तृणता त्रिणतापि च। अमरेण (२।८।८३) तु यथोक्तं धनुश्चापौ धन्वशरासन कोदण्डकार्मुकम् इष्वाश्वोऽपि इति। कल्पद्रुमेऽन्येऽप्यर्थाः सङ्०कलिताः सन्ति। यथा अस्त्रं धनुः इति जटाधरः। तारकं काण्डमिति शब्दरत्नावली। धनुर्धारिणः भगवत श्री रामभद्रस्य नाम को न वेत्ति सर्वेविदन्ति। धनुप्रधामयायुधः भगवान् अरीन्रणे जघान। अस्य प्रयोगः यथा अभिज्ञानशाकुन्तले (अभिज्ञान २।४) -

**अनवरत धनुर्ज्या स्फाणक्रूरकर्मा**
**रविकिरण सहिष्णुः स्वेदलेशैरभिन्नः।**
**अपचितमपिगात्रं व्यायतत्वादलक्ष्यं,**
**गिरिचर इव नागः प्राणसारं विभत्ति।।**

**धनुष्कपालम्**—धनुषः कपालमिव इत्यत्र इसुसोः सामर्थ्ये (पा०सू० ८।३।४४) इति षत्वम्। धनुरयवे इति वाचस्पत्यम्। (पृ०पृ० ३८४४)

**धाता**—दधातीति। डु धाञ् धारणपोषणयोः धातो तृच् ( पा०सू० ३।१।१३३) ब्रह्मेत्यर्थः। अस्य पर्यायः यथामरे (१।१।१६-१७)

**ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः।**
**हिरण्यगर्भः लोकेशः स्वयम्भुश्चतुराननः।।**
**धाताब्जयोर्निद्रुहिणोविरञ्चिः कमलासनः।**
**स्रष्टा प्रजापति र्वेधा विधाता विश्वसृड्विधिः।।**
**नाभिजन्माण्डजः पूर्वा निधनः कमलोद्भवः।**
**सदानन्दो रजोमूर्तिः सत्यको हंशवाहनः।। इति।**

यथा कालिदासः रघुवंशे (१०।१४९)

**धातारं तपसा प्रीतं ययाचे सहि राक्षसः।**

अस्यार्थोविष्णुरपि यथा महाभारते- (१३।१४९)

आधार: निलयोधाता पुष्पहास: प्रजागर:। संहारसमेय सर्वाप्रजाधयतीति व्युत्पतौ महादेवोऽप्यर्थ:।

पालके यथा मेदिन्यां- (५६।२७) धाताहिरण्यगर्भो ना पालके। त्रिष्वथो इति। प्राय एवमेवान्यकोशेषु।

**धात्रंशः**—धातृ अंश: इत्यवस्थायामिकोयणची (पा०सू० ६।१।७७) त्यणि रकारे रूपसिद्धि:। अस्यार्थ: धातु: ब्रह्मण: अंश इति समासे नारदादि:। धाता अंश: यस्येति समासे विष्णुरिति।

**धिक्**—अव्य०। धक्कयति। धक्क नाशने धातो: बाहुलकादिक्दधातेर्वा। अत्रामर: (३।३।२४१) धिक् निर्भर्त्सन निन्दयो:। एवमेवान्यकाशेषु।

**धीमान्**—धी: प्रज्ञा अस्त्यस्य अत्रामर:- (२।६।५-६)

**विद्वान् विपश्चिद् दोषज्ञः सन्सुधीः कोविदो बुधः।**
**धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः।।**
**धीमान् सूरिः कृतीकृष्टिर्लव्धवर्णो विचक्षणः।**

दूरदर्शीदीर्घदर्शी - इत्यादि।

मेदन्यिां (६२।११६) यथा- धीमान् पण्डिते च बृहस्पतो।

एवमेवान्यकोशकाराणां मतम्। यथामनुना (६।१०२)

**तस्यकर्मविवेकार्थ शेषाणामानुपूर्वशः।**
**स्वायम्भुवो मनुर्धीमानिदं शास्त्रमकल्पयत्।।**

**धूर्पतिः**—धुरः पतिः। वोंरुपधायाः (वा०सू० ९।२।७६) इति दीर्घः। रेफस्यविसर्गं बाधित्वा अहरादित्वात् (वा० ८।२।६९) वैकल्पिकः रेफः। पाक्षिके विसर्गोपध्यामानीयो। अत्र वाचस्पत्यम्। (प०पृ० ३८९५) पाक्षिकेधुष्पतिः, धूः पतिः इति। भारपतौ भारसहेचार्थोस्तः।

**ध्रुवका**—ध्रुवैव। क्षिपकादीनाञ्चेतीत्वविकल्पः। (वा० ७।३।४५) ध्रुवशब्दविषये यथामरः- (२।४।९) स्थानुर्ना ध्रुवः शङ०कुः इति हैमेन (२।५।३९४०) यथा-

**वसुयोगीभदोः शम्भो शंकावुतानपादजे।**
**स्थिरेनित्ये निश्चते व ध्रुवं खेऽजस्त्रतर्कयोः।।**
**ध्रुवामूलाशालिपर्णोः शृग्मदे गीतभिद्यपि।**

**अमरेऽन्यच्च यथा**—विदारी गन्धांशुमती शालपर्णी स्थिरा ध्रुवा। अन्यच्चतत्रैव (अमर ३।१।७२) शास्वतेध्रुवो नित्यः सदातन सनातनः। अन्यदपि (अमर २।७।२५) ध्रुवोपभृजष्नुहर्ना तु स्त्रुवो भेदाः शुचिः स्त्रियः इति। एवमेवान्यकोशेषु।

**ध्वस्त्म्**—ध्वंस्यते स्मेति। ध्वंसु अवस्त्रंशने धातोक्तप्रत्ययः। अत्रामरः (अमर ३।१।१०४) स्त्रस्तं ध्वस्तं भ्रष्टं स्कन्नं गलितमिति। एवमेवान्यकोशेषु। प्रयोगो यथा भागवते। (७।२।३०)

**प्रकीर्ण केशं ध्वस्ताक्षं रभसा दष्टदच्छदम्।**

**नक्**—शब्दोऽयमव्ययानव्ययश्च। प्रथमाविभक्तावेकवचने नक् नग् नट् नडिति चत्वारि रूपाणि। स्वरादिगणे पाठत्वादव्ययत्वम्। रात्रिरित्यर्थः। एवमेव वाचस्पत्यादिषु। (प० पृ०३९२५) अस्य पर्यायः रात्रि प्रयोगे द्रष्टव्यः।

**नक्तम्**—अव्य०। नज्जति ओ नस्जी व्रीढेधातोस्तमुप्रत्ययः। अत्रामरः (३।४।६) अथ दोषा च नक्तन्चेत्यादि। एवमेवान्यकोशेष्वपि। अस्य प्रयोगः यथा-तुषारभूर्तैरिव (१७९।१६) नक्तमंशवः।

**नकिः**—अव्य। वर्जनमर्थः। एवमेव नकिम् प्रयोगश्च।

**नञ्**—अव्य। अभावार्थकः। तद्यथा मेदिन्याम् (१७९।१६) -

**नञभावे निषेधे च स्वरुपार्थेऽव्यतिक्रमे।**
**ईषदर्थे सादृश्येतद् विरुद्ध तदन्ययोः।।**

वाचसूपत्ये (प० पृ० ३९४०) यथा -

द्वौ नञौ प्रकृतर्थं गमयतः - यथा-

**नाविष्णुः कीर्तयेद् विष्णुं नाविष्णुर्विष्णुर्विष्णुमाचरेत्।**
**नाविष्णुं संस्मरेद् विष्णुं नाविष्णु विर्ष्णुमाप्नुयात्।।**

समासे स्थितस्य स्वरे परे अन्, व्यन्जने परे अकारो विकल्पेन भवति। यथा- अनन्तः नान्तः, अच्युतः नाच्युतः। अस्यार्थाः षट् से च अ शब्दे द्रष्टव्याः। वाचस्पत्ये तु अभाव एव नञर्थ इति समर्थितम्।

यथानञच् समासेऽब्राह्मणमानयेत्यत्र पर्युदासे पूर्वपदे नञ् उत्तरपदार्थं सम्बन्धिनि क्षत्रिये लक्षणा। अघटः घटः इत्यादौ प्रसज्य प्रतिषेधार्थे नञि समाना धिकरण्यादभावलक्षणा व्यासेऽपि न घटः पटः इत्यादौ यथा-

शुक्लपट इत्यत्र शुक्लवल्लक्षणा। न पचति इत्यादौ क्रिया सम्बन्धे, भूतले न घट इत्यादौ प्रसज्य प्रतिषेधे न ञो मुख्यार्थता,सुबन्त सम्बन्धेऽपि न समासः विभाषधिकाराद् विकल्पेन समासानुशासनात्। यजितिषु ये यजामहे करोति नानुयाजोष्वित्यत्र पर्युदासे नञ् तेनायमर्थः, यजितिषु नानुयाजेषु अनुयाजव्यतिरिक्तेषु येयजामहे इति मन्त्रं करोति। अथ नानुयाजेष्वित्यत्र पर्युदासे नञ् तदा हि पदद्वयस्य नान्य परत्वं स्यात् समासापत्तिश्च तस्मादनुषंगात् करोति नञोऽन्वयात् प्रसज्य प्रतिषेधः तेनानुयाजेषु ये याजामहे इति मन्त्रं न करोतीत्यर्थः। एवञ्च नानुयाजोष्विति पद द्वयस्यनान्य परतानवानञो मुख्यार्थ त्यागः। समासाभावे साधुता चेति चेत् न समासस्यानित्यत्वात्। नानु याजेष्विति मुख्यार्थ वाक्यं पर्युदासे नञ। न चैवं वाक्य वृत्ति पदस्थ नञोऽन्य परत्वाभावः। गौर्वाहिकः, इत्यादौ वाक्येऽपि गवादि पदस्यान्यपरत्वात्। यदि च प्रसज्य प्रतिषेधे नञ तदा मन्त्र विधायकतन्निषेधयोः विरुद्धार्थत्वेन वाक्यभेदापत्तिः तस्मात् प्रतीतौ वाक्यत्ववलात् एक वाक्यत्वे सम्भवति वाक्य भेदस्यान्याय्यत्वात् नन पदे लक्षणां कल्प्यते न तु ननु पद मुख्यार्थानुरोधादेकवाक्यत्व त्यागः न हि पदार्थानुरोधेन् वाक्यार्थकल्पना किन्तु वाक्यार्थानुरोधात् पदार्थ कल्पना नम् पदञ्च केवलं नास्त्येव नञ् पदादेव सर्वत्र समासोनित्यत्वेनप्रयोगोपपत्तेः। अन्यथा प्रसज्यप्रतिषेधे नञ् न स्यादेव न पदेनैव चरितार्थत्वात्। अमानो नादृत्य पदमेव निषेधवाचकं समास वाक्यभेदेन नञो द्वै विध्याद्वा तथाभिधानम्। वस्तुतः अभाव मात्रं नञोऽर्थः।

**नदीः**—नदति, अव्यक्त शब्दं करोतीति। नद् धातोरच् प्रत्ययः। पचादिगणे नदट् इति निर्देशात् टिड्ढाणञिति (पा०सू० ४।१।१५) ङी०प् प्रत्ययः। अत्र शब्दकल्पद्रुमः (द्वि०पृ० ८१९) अष्टसहस्रधनुरन्यूनाव्याप्ततोया। सा च गंगा, यमुना, सरस्वती, कावेरी गोदावरी प्रभृतिः। तस्यलक्षणमाह छन्दोगपरिशिष्टम्। धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते न ता नदीशब्दवहा गर्तास्ताः परिकीर्तिताः। इति तिथित्वम्। तत्त पर्यायाः यथामरे (१।१०।२९-३०) अथ नदी सरित् तरंगिनी शैवलिनीतटिनी ह्रदिनी धुनी, स्रोतस्वती

द्वीपवती स्रवन्ती निम्नगाऽऽपगाकूलकवर्षा निर्झरिणी शेधोवक्रासरस्वती। कल्पद्रुमेऽन्येऽपि पर्याया: सन्ति संकलिता यथा ह्लदिनीधुनि: स्रोतस्विनी स्रोतोवहा, सागरगामिनी अपगाइतिभरत: निर्झरिणी सरस्वती समुद्रगा कूलकंषा, कलवती शैवालिनी सिन्धु समुद्रकान्ता सगरगा कृष्णा वाहिनी इत्यादि। मेदिन्यां (७४।६) यथा नदी सरिति शोणादौ ना इति। तज्जल गुणा:स्वच्छत्वं लघुत्वं दीपनत्वं पाचनत्वं तृष्णावहत्वं पथ्यत्वम् मधुरत्वमित्यादि। सर्वागुर्वी प्राङ्०मुखीवाहिनी स्याल्लघवीपश्चावाहिनी निश्चयेन, देशे-देशे तद् गुणा। सा विशेषान्नैषघत्ते गौरवं लाघवम्। प्रायो मृदुवहा गुर्वोलघ्व: शीलवहा स्मृता:। नद्य: पाषाणसिकतावाहिन्यो विमलोदका:। हिमवत् प्रभवायाश्च जलं तास्वमृतोपमम्। विन्ध्यात् प्राचीप्राच्यवाची प्रतीची या चोदीची स्यानदी सा क्रमेण। वातारोग्यं श्लेष्मपितार्तिलोपम्। पित्तोद्रेकं पथ्य पाकञ्च धत्ते। परिपात्रभवायाश्च विन्ध्याख्य प्रभवाश्च या:। शिरो हृद्रोगकुष्ठानाता हेतु: श्लीषदस्य च।

**ननान्दाः**—न नन्दति सेवयापि। नन्द धातो: नञि च नन्दो: (उ० २।९९) इत्युणादिना ऋण् वृद्धिश्च: सौ- विभक्तौ रूपम्। अमर: (२।६।२९) ननान्दा तु स्वसापत्यु:। यथा ऋग्वेदे (१०।८५।४६) सम्राज्ञीश्वसुरे भव, सम्राज्ञी श्वश्र्वा भव। ननान्दरि सम्राज्ञी अधि देवेषु इति।।

**नन्दना**—स्त्री०। नन्दयतीति। नन्दि धातौ ल्यु प्रत्यय:। दुहिता अर्थ: एवमेव शब्दकल्पद्रुमादिषु। (द्वि० पृ० ८२३)

**नप्तृ**-न पतन्ति पितर: येनेति। पत् धातो: नतृनेष्ट्त्व (उ० २।९६) इति उनादिना तृच् प्रत्ययेन निपातनात् साधु:। पुत्रकन्ययो: पुत्र: तत्तपर्याय: पौत्र:। एवमेव कल्पद्रुमादिषु। (द्वि० पृ० ८२६) यथा महाभारते (१।८५।२०) कथं शुक्रस्य नप्तारं देवयान्या: सुतं प्रभो। ज्येष्ठं यदुमतिक्रम्य राज्यं पूरो: प्रदास्यति।।

**नमस्**—अव्यय०। नमनम्। णम् ब्रह्मत्वे धातो असुन् (उ० ४।१८९) प्रत्यय:। अत्रामर: (३।४।१८) नमोनतौ इति। यथा मार्कण्डेय पुराणेदेवी माहात्म्ये-नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनम:। क्लीवलिंगोऽपि दृश्यते यथा भागवते (३।१३।४५) विधेम चास्यै नमसा सह त्वया। यस्या स्वतेजोऽद्रिनमिवावधा: अन्नमिति निघण्टु:। (निघ० २।७) ब्रजमिति च निघण्टु:। (निघ० २।२०) कल्पद्रुमे (द्वि० पृ० ८२५) संकलित: यथा-त्याग: सतम् इति उणदिकोष:। स्त्रीत्वम्। यथा ऋग्वेदे (७।१६।१) एनावो अग्नि नमसोजोनपातपाहुवे इति। वाचस्पत्यै (पृ० ३९६६) यथा स्वापकर्ष बाधक व्यापार:। त्यागेस्तत्व ध्वंसानुकूल व्यापारभेदा पुष्पं विष्णवेनम इत्यादौ विष्णूद्देश्यक मन्त्रकरणक त्यागविषय: पुष्पमित्येवबोध:।

**नवम्**—नृ धातोः कनिन्। वा गुणः। संख्याभेदे संख्याया तद्युक्ते च। एवमेव वाचस्पत्यादिषु। (पृ० ३९८८)

**नह्**—अव्य। न च ह च। प्रत्यारम्भे इति वाचस्पत्यम्। (पृ० ४००७)

**नह्यस्ति**—नहि उस्तीति स्थिते इकोयणची (पा० सू० ६।१।७७) तियणि अचोरहाभ्यां द्वे इति द्वित्वे नह्य्यस्ति। पक्षिके नह्यस्ति। नहि शब्दस्य व्युत्पत्तिश्चेत्थ्म् (८।४।४६) नह्यतीति। णह बन्धने धातोः इन् (४।११८) प्रत्ययः। अत्रामरः (३।४।११) अभावे नह्यनोनापीति।

एवमेवान्य कोषेषु अस्ति अस्य शब्दस्य व्याख्या तत्रैव द्रष्टव्या।

**नागी**—नागस्य स्थूला पत्नी। नाग शब्दात् जानपदति (पा०सू० ४।१।४२) स्थौल्येऽर्थे ङी०प् प्रत्ययः। नागपत्नी इति कल्पद्रुमः। (पृ० ८५१) नाग शब्दस्य वहवः पर्यायवाचिनः यथा-
अमरे (१।८।४) नागाः काद्रवेय इति। हेमेनात्र (२।३४-३६) यथा-

**नागे मतंगजे सर्पे पुन्नागे नागकेशरे।**
**क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च।।**
**देहानिलविशेषे चश्रेष्ठे स्यादुत्तरस्थिति।**
**नागं रंगे सीसपत्रे स्त्रीवन्थे करणान्तरे।।**

अन्यच्चामरे-

**दन्ती दन्तावलीहस्ती द्विरदो नैकयो द्विपः।**
**मतंगजो गजो नागकुन्जरौ वारणः करी।।**

इभः स्तम्बेरमः पद्मी-इति। एवमेवान्यकोशेषु अमरे अन्यत्रापि।
**नाना**—नेतेति। बिनाभ्या नानाञौ (सू० ५।२।२७) न सह इति नञो नाञ्।
अत्रामरः (अम० ३।३।२४७) नानेकोभयार्थयोः अन्यच् च यथा -

**पृथग् बिनान्तरेणर्ते हिरुग् नाना च वर्जने इति।**

मेदिन्या (१४२।४५) यथा-

**नाना शब्दो विनार्थेऽपि तथानेकोभयार्थयोः**
**स्थाने तुकरणार्थे स्याद् युक्त सादृश्ययोरपि।**

अस्य प्रयोगः यथा गीतायाम्- (गीता० १।९)

**नानाशस्त्र प्रहरणाः सर्वे युद्धविशारदाः।**

**नायकः**—नयति प्रापयतीति। णीञ् प्रापणे धातोः ण्वुल् प्रत्यय। वृद्धौ सत्यामायादेशः। (सू० ६।१।७८) अत्रामरः- (३।१।१०-११)

**स्वामी त्वीश्वरः पतिरीशिता।**

अधिभूः नायकः नेता प्रभुः परिवृढोऽधिपः।। इति।

मेदिन्यान्तु- (१०।१११)

**नायको नेतरि श्रेष्ठे माणमध्यमणावपि।**

एवमेवावशिष्ट कोशेषु। गीतायां (१।७) यथा-

**नायका मम सैन्यस्य संज्ञार्थे तान् ब्रवीमिते।**

**नाव्यम्**—नावा तार्यम्। नौवयोधर्मविष (पा०सू० ४।४।९१) इति यत् प्रत्ययः। वान्तो यि प्रत्यये ( वा०सू० ६।१।८९) इत्यावादेशः। अत्रामरः (१।१०।१०) नाव्यं त्रिलिङ्०गं नौतार्ये। एवमेव वाचस्पत्यादिषु। (प-पृ०४०५०) यथा- रघुः (४।३१)

**मेरु पृष्ठान्युदम्भसि नाव्याः सुप्रतरा नदीः।**
**विपनानि प्रकाशानि शक्तिमत्वाच्चकार सः।**

**नासिका**—नासते शब्दायते इति। नासृशब्देधातोः ण्वुल् (पा०सू० ३।१।१३३) प्रत्यये तत्तकार्ये निष्पन्नो अयं शब्दः। अत्रामरः (२।६।८९)

**क्लीवे घ्राणं गन्धवहा घोणा नासा च नासिका**

मेदिन्या (१७०।५) यथा- नासा तु नासिकायाञ्च द्वारोदूर्ध्वे दारूणि स्त्रियाम्। कल्पद्रुमे ( पृ० ८७३) यथा- शंखिनी इति राजनिर्घण्टः नासियं नस्या गन्धनाली गन्धवन्धा नक्रा इति शब्दरत्नावली। यथा मनुः (२।९०)

**श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।**
**पायूपस्थं हस्तपादं वाक् चैवं स्मृता।।**

तस्याः शब्दो घोत्कारः यथा नारसिहे पञ्चचत्वारिशदध्याये-

**शयानं रावणं दृष्ट्वा तल्पे महति वानरः।**
**नासायूथैस्तु घोत्कारैः विशद्भिः वायुसेवकैः।।**

**निकषा**—निकषणम्। नि उपसर्ग पूर्वक कष गतौ धातोः आः (उ० ४।१।१७४) समिन् निकषिभ्यामि ति आः। निकटमर्थः। तथा चामरः (३।४।७) समयानिकषा हिरुक् तत्रैव (अम० ३।४।१९) निकषान्तिक इति। निकषा नाम राक्षसमाता सा सुमाली राक्षसस्य कन्य विश्रावसो भार्या। तद् व्युत्पत्ति। यथा- निकषति हिनस्तीति। यथा मेदिन्या (मे० १६८।३९)

निकषा यातुमातरि। तथा च माघ० (१।६८)

पयोधिमाबद्धचलज्जलाविलां विलंध्यलंका- निकषा हनिष्यति।

**निर्जरः**—जरायाः निष्क्रान्तः। देवेत्यर्थः। तथाचामरः (१।१।७-९)

**अमरा निर्जरा देवास्त्रिदशा विवुधा सुराः।**
**सुपर्वाणः सुमनस्त्रिदेवेशा दिवौकसः।।**
**आदितेया दिविषदो लेखा अदति नन्दनाः।**
**आदित्या ऋभवोऽस्वप्ना अर्मर्त्या अमृतान्धसः।।**
**बहिर्मुखा क्रतुभुजो गीर्वाणा दानवारयः।**
**बृन्दारका दैवतानि पुंसि वा देवताः स्त्रियाम्।।**

मेदिन्यां (१३५।१०३) यथा-

**निर्जरः स्यात् पुमान् देवे जरात्यक्तेतुवाच्यवत्।**
**निर्जरा तु गडूच्यान्च तालपर्ण्यामपि स्त्रियाम्।।**

सुधाया क्लीवमिति कल्पद्रुमः। (प्र०८९२) जरा शब्दस्य गौणत्वेऽपि अजादौ प्रत्यये परे वा जरसादेशः। निर्जरसौ निर्जरौ इत्यादि। यथा देवीभागवते (५।८।१८)

**विशन्तु निर्जराः सर्वै कुशलं कथयन्तु वः।**

**निर्भस्त्रिका**—भस्त्रायाः निष्क्रान्तः। स्वार्थे कन् प्रत्ययेतत्तत्कार्ये - भस्त्रैसेति (पा०सू० ७।३।४७) वैकल्पिके इत्वम्। भस्त्राचर्म प्रसेविके त्यमरः।(२।१०।२३)

**निशा**—नितरां स्यति तनूकरोति व्यापारान्। नि उपसर्ग पूर्वक शो धातोः क प्रत्ययः। अत्र मेदिनीकारः (१६३।९)

**निशा दारु हरिद्राया स्यात् त्रियामाहरिद्रयोः।**

कल्पद्रुमे (पृ० ९०१) यथा- रात्रिः शर्वरी-

निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा विभावरी तमस्विन्यौ रजनी यामिनी तमीरक्षणे-

जननी शर्वरी चक्रभेदनी घोरा श्यामा याम्या दोषा तुङ्०गी भौती शताक्षी वास्तवा उषा वासतेयी तमानिट् इत्यादि। हरिद्रार्थक शब्दे यथा वैद्यक- रत्नमालायां: कल्पद्रुमे एव हरिद्रा पीतिका गौरी काञ्चनी रजनी निशा। मेहघ्नी पीता वर्णिनी रात्रिनायिका। एवमेव वाचस्पत्यादिषु। (१६३।९)

**निष्कौशाम्बिः**—निर्गतः कौशम्ब्यानगर्याः। गौणत्वेन ह्रस्वः। कौशम्ब्या नगर्याः निर्गते इति वाचस्पत्यम्। (प० पृ०४११८)

**नीचैः**—अव्य०। निचीयते। नि उपसर्ग पूर्वक चिञ् चयने धातौ: नौदीर्घश्चेत्युणादिनाडैसि: (उ० ५।१३) दीर्घश्च। अल्पेनीचै: इत्यमर:। (३।४।१७) मेदिन्यान्तु (१८।५।८२) नीचैस्वैराल्पयो मतमिति। एवमेवान्यकोशेषु। मेघदूतेप्रयोगौ (१०८) यथा-

**नीचैर्गच्छत्युपरि च दशाचक्रनेमिक्रमेण।**

**नीली**—नील शब्दात् अनाच्छादनार्थे जानपदकुण्डगौण-

इति ङी०ष् प्रत्यय:। आच्छादनार्थे नीला एव नीलाशाटी इत्यादि।

**नूनम्**–नु ऊणयति। ऊण परिहाणे धातो: अम् प्रत्यय:। निश्चितमर्थ:। तथाचामर: नूनमवश्यं निश्चये द्वये। अन्यच्च (३।४।१६) यथा- नूनं तर्केऽर्थे निश्चये इति। यथा- नूनन्तु निश्चिते तर्के स्मरणे वाक्यपूरणे। मेघदूते (१८३।६०) यथा- नूनं यास्यत्यमर मिथुन प्रेक्षणीयामवस्थाम्।

**नृ**—नयतीति। णी धातो: नयतेडिच्चे ति ऋन् प्रत्यय:।

पर्यायो यथामरे (२।१००)

**मनुष्या मानुषा मर्त्या मनुजा मानवा नराः।**
**स्युः पुमांसः पञ्चजनाः पुरुषा पूरुषा नरः।।**

एव मेवान्यकोशेषु। यथा शिवमहिम्न स्तोत्रे-

**नृणामेको गम्यस्त्वमसि पयसामर्णाव इव।**

**नेत**—अव्य०। नीधातोर्विच् प्रत्यय: तुगागम:। शंकार्थे। तद्यथा वाचस्पत्ये (प० पृ० ४१४४) प्रतिषेधे शंकायां समुच्चय च। न इति नैवेत्यर्थे। यथा ऋग्वेदे (८।५।९) अन्यो नेत् सूरि रोहते।

**नौः**—नुद्यते। णुद् प्रेरणो धातो: ग्लानुदिभ्या (उ० २।६४) डौ इति प्रत्यय:। यद्वा नयति नापयतीतिणीञ् प्रापणे धातो: अन्येभ्योऽपि ( वा० ३।२।१०१) इति ड:। नव अवति क्विप् (पा०सू० ३।२।७६) ज्वरत्वर (पा०सू० ६।४।२०) इत्यूठौ वृद्धि: (पा०सू०. ६।३।८९) तरणिरर्थ:। तथामर: स्त्रिया नौस्तरणिस्तरि:। अन्य पर्याया: नौका शब्दे द्रष्टव्या:।

**नौका**—नौ रेव। स्वार्थे कन् प्रत्यय:। नद्यादि सन्तरणार्थ काष्ठादि निर्मित यानविशेष:। तथा च कल्पद्रुम: (द्वि० पृ० ९।२९) वारिरथ: इति त्रिकाण्ड शेष:। तत्पर्याय यथा शब्दरत्नवल्यां कल्पद्रुमे: नौ: तरिकातरणि: तरि: तरै तरण्डी तरण्ड:- पादालिन्द उत्प्लवा होड: बाधू: बहित्रम् पोत: वहनमिति जटाधर:।

♦♦♦

# तृतीयोऽध्यायः

**पङ्०गूः**—पनते। पन् स्तुतौ धातोः बाहुलकाद् गु प्रत्ययः। स्त्रीत्व विवक्षायां पंगोश्चे (पा०सू० ४।१।६८) त्यूङ्० प्रत्ययः। अत्रामरः (२।६।४८) श्रोणः पङ्०गौ द्वे जंघाहीनस्येति तट्टीका। कल्पद्रुमे (तृ० पृ०५) त्वन्यैव व्युत्पत्तिः यथा- खजि गति वैकल्ये धातोः बाहुलकात् कु प्रत्यये खस्य पत्वे जस्य च गादेशे नुमि च रूप सिद्धिः। एवमेव वाचस्पत्ये। (प० पृ० ३१८१) यथा महाभारते (२।५।१२५) कश्चिदन्धांश्च मूकांश्च पंगून् - व्यंगान् बान्धवान्।

**पचतिकल्पम्**—ईषदूनं पचतीति। तिङ०न्तात् - ईषदसमाप्तौ (पा०सू० ५।३।६७) कल्पब् देश्य देशीयरा विति कल्पप्रत्ययः। ईषदूनस्य पाकस्य कर्ता। एवमेव वाचस्पत्यादिषु। तद्धिताश्चसर्व विभक्तिः इति (पा०सू०३।१।३६) अव्ययत्वम्।

**पचतिरूम्**—प्रशस्तं पचतीति। प्रशंसाया रूपप् प्रत्ययः (पा०सू० ५।३।६६)।

**पचन्ती**—ओदनादीन् पचतीति या। पाककर्त्री त्यर्थः एवमेव कल्पद्रुमादिषु।(तृ०पृ० ५१)

**पञ्च**—त्रि०। संख्या विशेषः। बहुवचनान्तोऽयम् तद् वाचकानि यथा कल्पद्रुमे (तृ० पृ०६) पाण्डवः शिवास्यम् इन्द्रियम् स्वर्गे ब्रताग्नि महापापम् महाभूतम् महाकाव्यम् महामरणः पुराणालक्षणम् अंगम् वाण वर्गः इन्द्रियार्थः इति कविकल्पलता। पञ्चसंख्याविशिष्टे त्रि०। यदुक्काममरे (२।९।८६) संख्या संख्य्ये ह्यादशत्रिषु। यथा- मनुः (११।१६५) पुष्पमूलफलानाञ्च पञ्चगव्य विशोधनम्।

**पञ्चतयी**—पञ्च अवयवा यस्या इति विग्रहे संख्याया अवयवे तयप् (पा०सू० ५।२।४२) प्रत्ययेन ङी०प्। (पा०सू० ४।१।१५) पञ्च संख्यायां तदन्विते त्रिषु इति वाचस्पत्यम्। (प० पृ० ४१४६)

**पटुजातीयः**—पटु शब्दाज्जातीयर (पा०सू० २।४।१५५) प्रत्ययः। तस्यापि तीयमानत्वात् ङि०त्सु सर्वनामत्व विकल्पः। पटु शब्दस्य व्याख्या यथामरे (२।४।१५५) अथ कुलकं पटोलः पटुः इति। तत्रैव (अम० २।१०।१९) दक्षे तु चतुरः पेशल पटवः सूत्थान उष्णश्च।

मेदिन्यां यथा (३५।२०)

**पटुदक्षे च नीरोगे चतुरेऽप्यभिधेयवत्।**

**पटोले तु पुमान्क्लीवे छत्रलावणयोरपि**

अमरस्य रामाश्रमूयां तत्रैव यथा-

पटुस्तीक्ष्णे स्फुटे दक्षे निष्ठुरे निर्दयेऽपि च इति रुद्रः। एवमेवान्य कोषेष्वपि।

**पतञ्जलिः**—पतः पतन् वा अञ्जिलिः नमस्कारतया यस्मिन् -शकन्ध्वादित्वात् पररूपम्। मुनिविशेषः। अत्र कल्पद्रुमः (तृ० पृ० २१) स तु पात्ञजल दर्शन महाभाष्यादिग्रन्थकर्ता- तत्पर्यायः गोनदीर्यः इति हेमचन्द्रः तत्रैव। चूर्णिकृतभाष्यकारः इति त्रिकाण्डशेषः - कल्पद्रुमे एव वररुचिः इति शब्दरत्नावली। केषाञ्चिन्मते योगसूत्र कारः पतन्जलिर्भाष्यकार पतन्जलिः भिन्न एव। किन्तु पाश्चात्याः अनयोरभेदं निर्दिशन्ति। तत्रएकं पद्यं यथा-

**योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।**
**योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं - प्राञ्जलिरानतोऽस्मि।**

**पतिः**—पाति रक्षतीति। पा रक्षणे धातोः पातेर्डतिः (उ० ४।५७) इति डति प्रत्ययः। भर्तेत्यर्थः। तथाचामरः (२।६।३५) धवः प्रियः पतिर्भर्तेति। तत्रैव (अम० ३।१।१०) स्वामीरीश्वरः पतिरीशिता। अधिभू नायकः नेता प्रभुः परिवृढोऽधिपः इति। कल्पद्रुमे (तृ० पृ० २३) यथा- कान्तः प्राणनाथः हृदयेशः जीवितेशः जामाता सुखोत्सवः नर्मकीलः नतगुरुः स्वामीरमणः इति - शब्दरत्नावली वरः परिणेता गृही इति राजनिर्घण्टः एतत् कल्पद्रुमे एव अन्यच्च तत्रैव- विधिवद् पाणिग्राहकः। स च अनुकूलदक्षिणधृष्टशठभेदात् चतुर्धा। सार्वकालिक परागंना परागंमुखे सति सर्वकालमनुरक्तोऽनुकूलः। सकलनायिकाविषयसमसहजानुरागो दक्षिणः। भूयो निःशंकः कृतदोषोऽपि भूयो निवारितोऽपि। भूयः प्रश्रयपरायणो धृष्टः। कामिनी विषयक पटुः शठः। अस्य प्रयोगः यथा श्रीमद्भागवते- (१०।२२।४)

**कात्यायनि महाभाये महायोगिन्यधीश्वरी।**
**नन्दगोपसुतं देवि पति मे कुरुते नमः।।**

प्राय अस्यविषये सर्वेषा कोशकारणमेवं मतम्। अस्य समासे एवाघि संज्ञा भवति नान्यत्र।

**पतिवत्नी**—पतिः विद्यते यस्याः। मतुप् (पा०सू०५।२।९४) प्रत्यये अर्न्तवर्तिपतिवतोर्नुगि (पा०सू० ४।१।३२) ति निपातनात् नुमागमश्चततः ङीप्। (पा०सू० ४।१।५) अत्रामरः (२।६।१२) पतिवत्नी सभर्तृकेति।

**इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नि तेजसः।**
**तद् योगात् पतिवत्नीषु पत्नीष्वासान द्विसूनवः।।**

**पथिन्**–पथन्ते अनेनेति। पथ गतौ धातोः पथिमथिभ्यामिनिः। यतन्ति अनेन वा पतस्थ (उ० ४।१२) चे त्युणादिना णिनिः थोऽन्था देशश्च। मार्गः। तथा चामरः (२।१।१५)

**अयनं वर्त्म मार्गाध्व पन्थानः पदवी सृतिः।**
**सरणिः पद्धतिः पद्या वर्तन्येकपदीति च।।**

**पद्धतिः**–पादाभ्यां हन्यते। हन् हिंसा गत्योः धातोः क्तिन् (पा० सू० ३।३।९४) प्रत्ययः। हिमकाषिहतिषु (पा०सू० ६।३।५४) चे ति पद्भावः। पथिपंक्तौ च इति हैमः। (३।२९४) पद्धतिः पंक्तिवर्मणोः इति मेदिनी। (६२।१३०) वाचस्पत्ये (प०पृ० ४२२५) ग्रन्थस्य निकृष्टार्थ बोधके ग्रन्थेभेदे उपनामभेदे स च शूद्रस्य अश्वघोषादिः। अस्य पर्यायः पथिन् शब्देऽवलोक्यः।

**पयस्**–पयते पीयते वा। पय गतौ पीङ्०पाने वाधातोः सर्वधातुभ्योऽसुन् (उ० ४।१८९) प्रत्ययः। पयः क्षीरे च नीरे च इति हैमः। (२।५९८) प्राय एवमेवान्यकोशकाराणमभिप्रायः। जलस्य पर्यायः अम्बु शब्देऽवलोक्यः।

अस्य प्रयोगः यथा रघुवंशे (।१।६)

पयः पूर्वैः स्वनिःश्वासैः कवोष्णणमुपभुज्यते इति।

**पयस्पाशम्**–कुत्सितंपयः। कुत्सितेऽर्थे पाशप् (पा०सू० ५।३।४७) प्रत्ययः। पयस् शब्दस्यव्याख्या तत्रैवलोक्या।

**पयोमुच्**–पयो मुञ्चतीति। पयसुपपद मोचृमोक्षणे धातोः क्विप्प्रत्ययः। (पा०सू० ३।२।१७८) मेघार्थकः।

प्रयोगश्च यथा रघौ (३।३) -

**तदाननं मृत्सुरभिः क्षितीश्वरो रहस्युपाघ्रायन तृप्तिमाययौ।**
**करीव सिक्तं पृषतैः पयोमुचां शुचि व्यपाये वनराजि पल्लम्।।**

**परिव्राट्**–परित्यज्य सर्वं ब्रजतीति। ब्रज् गतौ धातोः -

परो ब्रजेः षः इति क्विप् प्रत्ययः। अत्रामरः-
भिक्षुः परिव्राट् कर्मन्दो पाराशर्यपिमस्करी

कल्पद्रुमे यथा- सन्यासी श्रमण: इति जटाधर:। परिब्राजक: पराशरी व्रजक: इति शब्द रत्नावली। तस्य लक्षणं यथा गरुड़पुराणे- इत्यपि कल्पद्रुमे एव।

**सर्वारम्भ परित्यागौ भैक्ष्यास्यं ब्रह्ममूलता।**
**निष्परिग्रहताद्रोह सम्मता सर्वजन्तुषु।।**
**प्रियाप्रिय परिष्वगे सुखदु:ख विकारिता।**
**संवाह्याम्भ्यान्तरं शौचं सुखदु:ख विकारिता।**
**सर्वेन्द्रिये समाहारौ धारणाध्यान नित्यता।**
**भाव संशुद्धिरित्येष परिब्राड्वर्य उच्यते।।**

प्राय: अन्येष्वपि कोशेष्वेमेमैव।

**पर्णध्वत्**—पर्णान् ध्वसते इति। ध्वंसु अवस्रंसने धातो: क्विप्। (पा०सू० ३।२।१७८) पत्रध्वंसनकर्तेत्यर्थ:।

**पलिवनी**—पलितमस्त्यस्या:। नान्तत्वात् ङीप् (पा०सू० ४।१।५) प्रत्यय:। वृद्धापलिक्नी त्यमर:। (२।६।१२) कल्पद्रुमे (तृ० पृ० ७३) बालगर्भिणी गौ इत्यप्यर्थ:। अन्यच्चाप्येवमेव।

**पलिता**-फलति फलते वा। फल निष्पत्तौ ञि फला विशरणे वाधातो: लोष्ट पालिताविं (उ० ३।९२) त्युणादिना साधु:। यद्वा पलति स्म। पल गतौ धातो:क्त:। (पा० सू० ३।४।७२) पलनं वा नपुंसकेभावे क्त:। (पा०सू० ३।३।११४) अत्रामर: (२।६।४१) पलितं जरसा शौक्ल्यं केशादाविति। मेदिन्यां (६३।१२३) पलितं शैलजे तापे केश पाके च कर्दमे। एवमेवान्य कोशेषु।

**पवमान:**—अग्ने: द्वितीय पुत्र:। विशेषेण अग्नी ति प्रयोगे द्रष्टव्य:।

**पशु**—अव्य०। दृश्यते अनया। दृश् धातो अर्जिदशीत्युणादिना भावे कु प्रत्यय: पशि आदेशश्च। सम्यक् दर्शनमर्थ: तथा च मेदिनी (१६३।१०) पशुर्मृगादि देवाजे नाव्ययं पशु दर्शने। मृगादिष्वर्थेषु व्युत्पत्तिर्यथा- सर्वमविशेषेण पश्यति। पूर्ववत् कु प्रत्यय:। अन्याव्युत्पत्तिर्यथा पश्यन्ति पश्यन्ति पार्श्व हस्ताभ्यां हिताहितमिति। तस्य लक्षण लोमलागूलवत्वम्। तद् भेदा: यथामरस्य द्वितीयाध्याये- सिंह: व्याघ्र: तरक्ष: वराह: कपि: भल्लूक: खड्गी महिष: शृंगाल: विडाल: गोध: पूर्वावित् हरिण: कृष्णसार: रुरु: न्युंक: रंकु: शम्बर: रौहिष: गीकर्ण: पृषत: एण: ऋष्य: रोहित: चमर: गन्धर्व: शरभ: राम: सृमर: गवय: शस: खट्टास: गौ: उष्ट्र: छाग: मेघ: खर: हस्ती अश्व: इत्यादि।

**पाट्**—अव्य०। पाटयति कार्यान्तरं प्रेरणात् पूर्वकार्यं छेदयतीति। पटगतौ धातो: क्विप् (पा०सू० ३।२।१७८) प्रत्यय: अत्रामर: (३।४।७) अथ सम्बोधनार्थका: स्यु: प्याट् पाट् अंग है हे भो: इति एवमेवान्य कोशेषु।

**पाण्डुः**—पण्ड्यते ज्ञायते। पडि गतौ धातोः मृगय्वांदित्वात् (उ.१।३७) कुः। पृषोदरादि (पा०सू० ३।३।१०९) त्वादूदीर्घः। अत्र कल्पद्रुमे (तृ०पृ०१०३)

पाण्डुस्तु पीतभागार्थः केतकी धूलिसन्निभः इति शब्दार्णवः। पाण्डुः कुन्तिपतौ सिते इति हैमः। पाण्डुरफली क्षुपः पटोलः इति राजनिर्घण्टः। सितपीतसमायुक्तः पाण्डुवर्णः प्रकीर्तितः इति सुभूतिः। भेदोऽपि पाण्डुरस्तु रक्तपीतभागी प्रत्यूष चन्द्रवत्। पाण्डुस्तु पीतभागार्द्धः केतकी धूलि सन्निभः इति भरतः। नृपति विशेषः स च शान्तनु पुत्रः विचित्रवीर्यस्य क्षेत्रे व्यासाज्जातः। अस्यदेहस्य पाण्डुताकारणं महाभारतादिषु निरुपितमस्ति। नागभेदः श्वेत हस्ती, सितवर्ण रोग विशेषः इति शब्दरत्नावली। एतत् सर्वं कल्पद्रुमे। अमरे (१।५।१३) यथा- हरिणः पाण्डुरः पाण्डुः इति। प्रयोगश्च यथा रघुवंशे (३।२)।

शरीरसादादसमग्र भूषणा मुखेन सालक्ष्यत लोध्र पाण्डुना। अन्येषुकोशेष्वपि प्राय एवमेव।

**पाणिग्रहीती, पाणिग्रहीता**—पाणिर्गृहीतोऽस्याः। पाणिगृहीती भार्यायामि (पा०सू०४।१।५२) ति ङी०ष्। अन्यत्र पाणिग्रहीतैव। अत्रामरः (२।६।५)।

**पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी।**
**भार्या जायाऽथ पुम्भूम्नि दाराः।। इति।।** (मेदिनी १२६।५७)

प्राय अन्यत्राप्येवमेव।

**पात्रम्**—इत्यत्रानचि (पा०सू०८।४।४७) चेति द्वित्वे प्राप्ते दीघादाचार्याणामिति (पा०सू०८।४।५२) निषेध। अस्य व्युत्पत्तयः यथा–पाति रक्षति क्रियामाधेयं वा पिबन्ति अनेन वा। पा रक्षणे पा पाने वा धातोः सर्वधातुभ्यः (उ० ४।१५८) ष्ट्रन् प्रत्ययः।

**पात्रं स्रुवादौ पर्णे च भोजने राजमन्त्रिणि।**
**तीर द्वयान्तरे यो ये पुरुः प्राज्येऽभिधेयवत्।।**

**पादः**—पद्यते गम्यते अनेनेति। पद् गतौ धातोर्धञ्। (पा०सू०३।३।१) पादौ बुघ्ने तुरीयासे शैल प्रत्यन्त पर्वते, चरणे च मयूखे चेति मेदिनी। (७५।९।१०) अमरे (२।९।९९) यथा-कुडवः प्रस्थ इत्याद्याः परिभाषार्थिकाः पृथक् पादस्तुरीयः स्यादिति।

**पापी**—स्त्री०। पाति रक्षति अस्मादात्मानम्। पा धातौः पानीविपिभ्यः (उ०३।२३) इति पः। स्त्रीत्व विवक्षायां केवलमामकभागधेयपापे (पा०सू०४।१।३०) ति ङीप्। पापमस्त्यस्येति व्युत्पत्तौ पुलिंगः। पाप शब्दे यथामरः (१।४।२६) अस्त्रीपाकं पुमान्पाप्मापापं किल्विष कल्मषम्। कलुष वृजिने नोधमह्नी दुरित दुष्कृतम्। तत्रैव (अम०३।१।४७) नृंशसः धातुकः क्रूरः पाप इत्यप्यस्ति। प्राय एवमेवान्यच्च।

**पामनः**—पाययत्यगंम्। पैशोषणे, पायते देहोऽस्माद्वा पा रक्षणे पिबति देहं वा पा पाने धातोःमनिन् (उ०४।१४५) प्रत्ययः। पामन् शब्दस्य नान्तवत्वेऽपि संख्यावाचकाभावेन षट् संज्ञा विरहात् ततः परस्य जसो न लुक्। अत्रामरः (२।६।५३) - कच्छा तु पाम पामा विचर्चिकेति एवमेवान्यकोशकाराणमभिप्रायः।

**पार्श्वम्**—पर्शूनां समूहः पर्श्वाणस् (वा०४।२।४ .) वक्तव्यः इति णस् प्रत्ययः सिति (पा०सू० १।४।१६) चे ति पदत्वात् भत्वा भावः। अत्रामरः (३।२।४१) द्वे पर्श्वुकाना पृष्ठाना पार्श्व पृष्ठ्यामिति क्रमात्। मेदिन्या (१५८।१८) यथा-

पार्श्व कक्षाधरे चक्रोपान्ते पशुगणेऽपि च। प्राय अन्यत्राप्येवमेव।

**पावकः**—पुनाति। पूञ् पवने धातोः ण्वुल् (पा०सू०३।१।१३३) प्रत्ययः।

अत्र हैमः (३।६२-६३)

**पावकोऽग्नौ सदाचरे बन्हिमन्थे च चित्रके।**
**भल्लातके विहंगे च शद्वायितृ नरेऽपि च।।**

विशेष अग्निइति प्रयोगे द्रष्टव्यः।

**पिण्डग्रः**—पिण्डं ग्रसते। पिण्डभोक्तेत्यर्थः। पिण्ड शब्दस्य व्युत्पत्तिर्यथापिण्डते पिण्ड्यते वा। अत्र मेदिनीकारः (४१।१८-२०)–

**पिण्डो बोलेबले सान्द्रे देहगारैकदेशयोः।**
**देहमात्रे निपावे च गोलसिल्हकयोरपि।।**
**ओण्ड्र पुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः।**
**पिण्डी च पिण्डितगरे लावू खर्जूर भेदयोः।।**

**पिण्डग्लः**—पिण्डं ग्रसते। पिण्डग्रवत्।

**पिता**—पाति रक्षत्यपत्यं यः। पा रक्षणे धातोर्तृच् (उ०२।९५) प्रत्ययेन निपातितः। अत्रामरः (२।६।२८) तातस्तु जनकः पिता। कल्पद्रुमे (पृ०१४६) यथा- प्रसविता जनयिता वप्ता गुरुः जन्मदः जन्यः जनितेति शब्दरत्नावली। बीजीबध्रः इति हेमचन्द्रः। तस्य मान्यलक्षणाञ्च यथा–

ब्रह्मवैवर्ते गणपतिखण्डे चतुश्चत्वारिशंदध्याये–

**मान्य पूज्यश्च सर्वेभ्यः सर्वेषां जनको भवेत्।**
**अहो यस्य प्रसादेन सर्वान् पश्यति मानवः।।**
**जनको जन्मदाता रक्षकश्च पिता नृणाम्।**
**तातो विस्तीर्ण करणात् कलया स प्रजापतिः।**

एवमेव प्रायः अन्यत्र चापि।

**पिधानम्**—अपि उपपद धातो ल्युट् (पा०सू०३।३।११५) प्रत्यये अल्लोपः। छदनमर्थः। तथाचामरः (१।३।१३) अन्तर्धाव्यवधा पुंसित्वन्तर्धिरपवारणाम्। अपिधान तिरोधान पिधानाच्छादनानि च यथा आर्यसप्तसत्याम्-युगपत्त्रजघनोरः स्तनपिधानमधुरे त्रयास्मितार्द्र मुखि। लोलाक्षि नेपपवनो विरमति तव परिवर्ति इति। उदन्चनमिति हेमचन्द्रः (४।९२)।

**पिबध्यै**—तुमर्थे सेऽसेन (पा०सू०३।४।९) इत्यादि शध्यै प्रत्ययः। शित्वात् सार्वधातुक (पा०सू० ३।४।११३) संज्ञकत्वात् पिबादेश (पा०सू० ७।३।७८) कृन्मेजन्तः (पा०सू० १।१।३९) इत्यव्ययत्वम्।

**पिसङ्गी**—पिसंग शब्दात् पिसंगादुधि (वार्तिक ४।१।३९) ति वार्तिकेन ङीप् प्रत्ययः। पिसर्गे यथामरः१० - कडारः कपिलः पिङ्ग पिसङ्०गौ कद्रु पिंगलौ। मेदिन्या (२२।९-१०) यथा-

**पिङ्०गागोरचना हिंगु नाडिका चण्डिकासु च**
**पिङ्०गो शम्यां पिशंगे बालके तु नपुंसकम्।।**

प्रायः एवमेवान्यकोशेषु।

**पीलुः**—अपिलातीति। अप उपसर्ग पूर्वक ला धातोः बाहुलाद् डुः। अपेरलोपश्च। पीलुवृक्षः। तत्फलं पीलु प्रवृत्तिनिमित्त भेदादत्र न पुंवत्। इति वाचस्पत्यम्। (प०पृ०४३४७)

**पुस्कोकिलः**—पुमान् कोकिलः। पुरुषपिकपक्षी। पुम् कोकिल इत्यत्र कर्मधारय समासे तस्यान्तलोपे पुंसः सन्निति मस्य सनिकृते निष्पन्नः इति कल्पद्रुमः। (तृ०पृ० १६२) किन्तु वैयाकरणसिद्धान्तकौमुद्यान्तु पुम् कोकिलः इत्यत्र मस्यरुत्वे (पा०सू०८।३।६) अनुनासिक (पा०सू०८।३।२) सत्वे (वा०८।३।३४) च कृते निष्पद्यते। अस्य प्रयोगः यथा कुमारसम्भवे। (कुमार ३।३२)

**चूताङ्०कुरास्वाद कषाय कण्ठः पुंस्कोकिलो यन् मधुरं चुकूज।**

**पुनर्**—अव्य। पनते। पन स्तुतौ धातोः बाहुलकादरः अकरस्योकारश्च। अत्र मेदिनीकार (१८४।७२) पुनरप्रथमे मतम्। अधिकारे च भेदे च तथा पक्षान्तरेऽपि चे ति- अवधारणे चेत्यमरः (३।४।१५)। अन्यत्राप्येवमेव।

**पुनर्भूः**—पुनर्भवति संस्कृता जायात्वेनेति। अत्रामरः (२।६।२३) पुनर्भू दिंधिषू रुढाद्विः इति। अक्षत योनित्वात् विधवापुन र्रुह्यते इत्यसावन्यस्य भूत्वान्यस्यभवती त्यभिप्रायः। अत्र क्विप् (पा०सू० ३।२।१७८) प्रत्ययेन विभक्तिकार्याणि। प्रायः एवमेवान्यत्रच।

**पुमान्**—पाति रक्षति। पा धातोडमसुन् (उ०४।१७७) प्रत्ययः। अत्रामरः (२।६।१) स्युः पुंमासःपचंजनाः पुरुषपूरुषाः नराः इति। मेदिन्यांयथा (१७१।२३)-

पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्र प्रकाशयोः तरौ बले च वेगे च तथा लोकान्तरेऽपि च।

चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः। प्रायः कल्पद्रुमादिष्वप्येवमेव। (तृ०पृ०१७२)।

**पुरस्करोति**—पुरः करोती त्यत्र नमस्पुरसोगत्योः (पा०सू०८।३।४०) इति सत्वम्। पूजाकरोतीत्यर्थः।

**पुरा**—पुरति अग्रे गच्छतीति। पुर बाहुलकात् क प्रत्ययः। अत्र मेदिनीकारः (१८४।६९) पुरा पुराणे निकटे प्रबन्धातीति भाविषु। प्रायः एवमेव कल्पद्रुमादिषु। (तृ०पृ०१७९) तत्र कल्पद्रुमे भविष्यादासत्तिः इति केचित्। भीरूः इति शब्दरत्नावली। प्राक् इति हेमचन्द्रः। इत्यद्यर्थाः सन्ति। प्रयोगश्चास्य यथापञ्चदश्याम् (पन्च० २।१४)

**इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम्।**
**सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः।।** इति।।

**पूतक्रतायी**—पूतक्रतू इन्द्रः तस्य पत्नी। इत्यत्र पूतक्रतोरै (पा०सू०४।१।३६) चेति ङी०प् प्रत्यय ऐकारादेशश्च। शची ति कल्पद्रुमः (तृ०पृ०२१५)। एवमेवान्यत्रच।

**पूर्वः**—सर्वनाम संज्ञकः पूर्वयति। पूर्व निकेतने धातोरच (पा०सू० ३।१।१३४) प्रत्ययः। पूर्वे तु पूर्वजेषु स्युः पूर्वः प्रागाद्य योस्त्रिषु इति मेदिनी (१०५।६)। हैमेन (३।५४४) श्रुतिभेदे चार्थोऽस्तीत्युक्तम्। अमरे (२।३।१३३) यथा–पूर्वपौरस्त्य प्रथमाद्याः इति। ब्रह्मण अर्थे पर्यायः धाता प्रयोगे द्रष्टव्यः।

प्रयोगो यथा कुमारसंभवे (१।५३)

**यदैव पूर्वेजनने शरीरे सा दक्षरोषात् सुदती ससर्ज।**
**तदा प्रभृत्येव विमुक्त संगः पतिः पशूनामपरिग्रहोऽभूत्।।**

**पृथक्ः**—अव्य। प्रथयतीति। प्रथ प्रक्षेपे धातोः प्रथः (उ०१।१३६) कित् सम्प्रसारणच्चेत्युणादिनाजिः कित्सम्प्रसारणञ्च। अत्रामरः (३।४।३) पृथग् बिनान्तरेणर्ते हिरुङ्० नाना च वर्जने यथा मार्कण्डेयपुराणे (१४।६६)–

**तेषामेतैः सितैः शास्त्रैमुहुर्विलपता त्वचः।**
**पृथक् कुर्वन्ति वैम्याम्याः शरीरादतिदरुणः।।**

**प्याट्**—अव्य०। प्यायते। प्यैङ्० वृद्धौ धातोः ट् प्रत्ययः। सम्बोधनमर्थः। अस्य पर्यायः पाट् शब्दे द्रष्टव्यः।

**प्रतान**—अव्य०। प्रपूर्वकं तनु विस्तारे धातोर्घञ् प्रत्ययः। अत्र वाचस्पत्यम् (व०पृ० ४४३६) ऋषि भेदे तन्तु युक्ते अलाबू त्रपुषादौ गुच्छ गुल्मन्तु विविधं तथैव तृण जातयः बीजकाण्डरुहाष्येव पृतना वल्लएव वेति मनु तत्रैव। तन्तौ यथा-रघुः लताप्रतानोद्ग्रथितै स कैशैरधीज्यधन्वा विचचार दावम्।

**प्रतिदिवन्**—प्रतिदीव्यति। प्रति पूर्वक दिव् धातोः कनिन् (उ०१।३५७) प्रत्ययः। अत्र कल्पद्रुमः (वृ०प० २५५) सूर्यः इति त्रिकाण्डशेषः। एवमेवोपलब्धकोशकाराणां मतम्।

**प्रतीची**—प्रतिदिनान्तं प्रतिदिनान्तम ञ्चति सूर्यमिति। अञ्चुगतिपूजनयोः धातोः क्विन् (पा०सू० ३।२।५९) प्रत्यये तत्तकार्येरूपसिद्धिः। पश्चिम दिगित्यर्थः तथाचामरः (१।३।१) प्राच्यवाची प्रतीच्यास्ताः पूर्वदक्षिण पश्चिमाः। प्रायः एवमेवान्यकोशेषु। महाभारते (४।४१।१८) यथा—

**येनासौ व्यजयत् कृत्स्ना प्रतीचीं दिशि माहवे।**
**कलापो ह्येष तस्यासीन् माद्रीपुत्रस्य धीमतः।।**

**प्रत्यक् पुष्पा**—प्रत्यञ्चि पुष्पाणि यस्या इति विग्रहे सदच्काण्ड (वार्तिक ४।१।४) प्रान्त शतैकेभ्यः पुष्पादि ति टाप् प्रत्ययः। अपामार्ग इत्यमरादिषु। (२।४।८८)।

**प्रत्यङ्०**—प्रत्यन्चतीति। प्रतिपूर्वादन्चेः क्विन्। (पा०सू० ३।२।५९) अस्य पर्यायः प्राङ्शब्दे द्रष्टव्यः।

**प्रद्युः**—प्रकृष्टः द्यौः स्वर्गो यस्मात्तत्। पुष्यमिति कल्पद्रुमः (तृ०पृ०२७४) वाचस्पत्येत्वन्यैव (पृ०४४७०) व्युत्पत्तिः प्रकृष्टा हयौर्दिनमत्र। प्राय एवमेवान्यकोशेषु।

**प्रधीः**—प्रकृष्टा धीर्यस्य। प्रकृष्ट बुद्धियुक्तः। प्रकृष्टायां बुद्धौस्त्री०। प्रकृष्टं ध्यायतीति कर्तरि क्विप्। प्रकृष्टाध्ययनकर्तरि त्रि०।

**प्रशाम्**—प्रकर्षेण शाम्यति यः। प्र पूर्वक शम् धातोः क्विप् (पा०सू०३।२।१७८) अनुनासिकस्य (पा०सू० ६।४।१५) क्विझलोः इति दीर्घः। अत्र कल्पद्रुमः (तृ०पृ०२९७) शान्तः इति मुग्धबोधव्याकरणम्। सामर्थ्ये नान्तो अव्ययम्। इति वाचस्पत्यम्। (प०४४९४)।

**प्रश्नः**—इत्यत्र शाते तिश्चुत्व निषेधः। प्रच्छनमिति। प्रच्छ धातोः यजयाचयते ति भावे नङ्०प्रत्ययः च्छवोः शूडनुनासिके (पा०सू० ३।३।११०) चेतिशः। प्रश्ने चेति ज्ञापकात् न सम्प्रसारणम्। अत्रामरः (१।६।१०) प्रश्नः अनुयोगः पृच्छा चेति प्राय एवमेवान्यकोषकारणां मतम् मनुना (१।११५) प्रयोगश्च यथा कृतः—

**साक्षी प्रश्न विधानञ्चधर्म स्त्री पुंसयोरपि।**

**प्रष्ठौहः**—प्रष्ठं श्रेष्ठं वहतीति प्रस्थवाट्। वहश्चे ति ण्विः (पा०सू०३।२।६४)। तत्तत्कार्ये प्रष्ठ ऊहः इत्यत्र एत्येधत्यूठ्सु (पा०सू०६।१।८९) इति वृद्धिः। श्रेष्ठकर्म कर्तेत्यर्थः। अत्र वाचस्पत्यम् (पृ०४४९४)।

**युगपार्श्वे प्रथमं गवाहिके यः प्रथमं वाहयति।**

**प्रस्तीमीः**—प्रपूर्वक सत्यैशब्दसंघातयो रिति क्त प्रत्यये आत्वेप्रस्त्योऽन्यतर (पा०सू० ८।२।५०) स्यामि ति निष्ठातस्य मत्वे तत्तकार्ये प्रस्तीमीः। अत्र कल्पद्रुमः (तृ.पृ.३०२)। संहत–ध्वनितः इति एवमेव वाचस्पत्यादिष्वपि।

**प्राङ्०**—प्रकर्षेणाञ्चतीति। प्र पूर्वक अञ्चु गतिपूजनयोरि ति धातोः गत्यर्थ कात् नोप धात् ऋत्विक्दधृगि (वाच० पृ०४५०१) ति क्वि प्रत्ययः तत्तत्कार्याणि। पूर्वादिगेत्यर्थः। तथा च मेदन्याम् (३।२।५९) प्राक् शब्दो दिशि देशे च काले तु वाच्यलिंगकः तत्रैव (मे० २७।७) प्राक् पूर्वस्मिन्नवान्तरे। उग्रे क्रमाते अतीते च देशे दिक् कालयोरपि इत्यप्यस्ति। प्राय एवमेवामरादिषु।

**प्राङ्०मुखी**—प्राङ्० पूर्वमुखं यस्याः। दिक् पूर्वपददिति प्रत्ययः। प्राङ्० शब्दस्य व्याख्या तत्रैवावलोक्या। मुख शब्दे उच्यते। खनति विदारयत्यन्नादिकमनेन। खन्यते विधात्रा सुखमनेन वेति। खनु अवदारणे धातोः ङि०त्खनेर्मुट् चोदात्तः (पा०सू०४।१।६०) इत्यच् मुडागमश्च। अत्रमेदिनीकारः (२०।५)।

**मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि।**

सन्ध्यन्तरे नाटकादेः शब्दोऽपि चनपुंसकमि ति श्रेष्ठे इति हैमः। (२।२४) मुखावयवविशेषस्य पर्यायः यथामरे (२।६।८९)।

**वक्त्रास्यं वदनं तुण्डमाननं लपनं मुखमिति। एवमेवान्य कोशेषु।**

**प्राची**—प्रथमञ्चति प्राप्नोति सूर्यामिति। विशेष व्याख्याप्रतीची शब्दे द्रष्टव्या।

**प्रातः**—अव्य०। प्राततींति। प्र पूर्वक अत सातत्यगमने धातोः अरन् (उ०५।५९) प्रत्ययः। अत्रामरः (३।४।१९) प्रगे प्रातः प्रभाते इति। सूर्योदयावधित्रिमुहूर्तकालः। रघुवंशे (१।९०) यथा प्रयोगः–

**प्रयता प्रातरन्वे तु सायं प्रत्युद्व्रजेदपि।**

**प्रायः**—अव्यः। प्रयाणम्। प्रपूर्वक अय गतौ धातोः असुन् (उ०४।१८९) प्रत्ययः। अत्रामरः (३।४।१७) प्रायो भूम्नि इति। मेदिन्यां (११५।३६) यथा–प्रायो मरणनशने मृत्यौ बाहुल्य तुल्ययोः मरणाद्यर्थे व्युत्पत्तिर्यथा–प्रकृष्टमयनमिति। अत्र प्रपूर्वक इ धातोरच्

(पा०सू० ३।३।५६) प्रत्यये सत्यपि निष्पत्तिर्भवति। रामायणे (४।५३।१२) प्रयोगश्चयथा–

**अहं वा प्रतिजानामिनगमिष्याम्यहं पुरीम्।**
**इहैव प्रायमासिष्ये श्रेयः मरणमेव च।।**

**प्रार्णम्**–प्रगतमृणम्। प्र ऋणमि त्यवस्थायां प्रवत्सतरकम्बल (वार्तिक० ६।१।८९) वसन्दशार्णनामृणे इति वृद्धिः। वाचस्पत्ये (पृ०४५२९) (पृ०४५२९) यथा–व्युत्पत्तिः प्रकृष्टमृणमिति। शेषकोशेष्वपि प्राय एवमेव।

**फलम्**–फलतीति। ञिफला विशरणे फलनिष्पत्तौ वा धातोः अच् (पा०सू० ३।१।१३४) प्रत्ययः। अत्र हैमः (२।५१०-११) फलं हेतुफले जातीफले फलक सस्ययोः। त्रिफलायां च कक्कीले शस्त्राग्रे व्युष्टिलाभयोः फली फलिन्यमिति। वाचस्पत्ये (पृ० ४५५१) यथा-वाणाग्रे आर्तवे इति शब्दरत्नावली। दाने धरण मुष्के च कुटजवृक्ष इति शब्दर० धात्वर्थनिर्देशे प्रयोजनोद्देशे प्रयोजने, धात्वर्थजन्ये संयोगादौ च प्रमेय भेदे इत्यादि। अस्य प्रयोगः अभिज्ञान शाकुन्तले- प्रथमांके यथा-शान्तमिदमाश्रम पदं स्फुरति च मम बाहुः कुतः फलमिहास्य।

**बलाका**–बलते बल संवरणे धातोः बलाकदयश्चे (उ०४।१४) त्युणादिना अक् प्रत्ययः। यद्वा बलेनाकतीति बल पूर्वक अक् कौटिल्य गतौ धातोरच प्रत्ययः। बकजाति-विशेषः तथाचामरः (२।५।२५) बलाका विषकण्ठिका कल्पद्रुम (प०पृ०३९९) यथा-विषकण्ठी बलाकी इति शब्दरत्नावली। करायिका लिगंलिका इति जटाधरः। विषकण्ठी-शुष्कांगा दीर्घकन्धरा धर्मान्ता कासुको श्वेतमेघानन्दा जलाश्रयेति।

**बह्वी**–स्त्री०। बहु शब्दात् बह्वादिभ्यश्चे (पा०सू०३।१।४५) तिङी०प्। बहुशब्दस्य व्युत्पतिर्यथा-बहते इति। बहि वृद्धौधातोः लघि बह्योर्नलोपश्चे त्युणादिना कु प्रत्ययः न लोपश्च (उ०१।३०) अत्रामरः (३।१।६३) प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु। पुरुहं पुरुं भूयिष्ठं स्फिरं भूयश्च भूरि चेति। अस्य वैदिक पर्यायः यथा कल्पद्रुमे (च०पृ०४०९) अरू तुनि पुरु भूरि शश्वतविश्वम् परिणसा व्यानसिः शतं सहस्त्रं सलिलं कुर्वित इति द्वादश नामानि वेद निघण्टौ। प्राय एवमेवान्य कोशेषु।

**बहुवृत्रहन्**–बहवः वृत्रहनो यस्मिन्मन्वन्तरे। वृत्रहन् शब्दस्य-पर्यायः ई इन्द्र प्रयोगे बहु शब्दय च पूर्वप्रयोगेद्रष्टव्यः।

**बहुपूषण**–बहवः पूषणः सूर्याः यस्मिन्। पूषण् शब्दस्य व्युत्पत्तिर्यथा-पुष्णाति पूषति वा। पुष पुष्टौ पूष वृद्धौ वा धातोः श्वनुक्षनपूषधित्युणादिना निपातितः।

**बह्वर्यमन**—बहव: अर्यमणो यस्मिन्। अर्यमन् शब्दस्य व्यत्पत्ति र्यथा-इयति। अर्यमा पितृदैवते सूर्यभक्तायामिति हैम:। (३।३।८४) अन्य पर्याय: पूर्व शब्दे द्रष्टव्य:।

**बह्वृचा**—बहव: ऋचो ध्येया यस्या इति। जातेस्त्री विषयादयोपधादि (पा०सू०४।१।६३) ति ङीप्। कल्पद्रुमे (तृ०पृ०४१२) तु वह्वृचस्य ऋगवेदज्ञस्य पत्नी इति व्युत्पत्तिरस्ति। प्राय: एवमेवान्य कोशेषु।

**बाला**—प्रथम वयोवाचित्वात् वयसि (पा०सू० ४।१।२०) इति प्राप्तङीप: टाब् (पा०सू०४।१।४) बाधते। अत्र मेदिनीकार: (१४८।४०)-

**बालो ना कुन्तले श्वस्य करिणश्चापि बालधौ।**
**नारिकेले हरिद्रायां मल्लिकाभद्यपि स्त्रियाम्।।**
**वाच्यलिंगोऽर्भके मूर्खे ह्रीवरे पुंन्नपुंसकम्।**
**अलंकारान्तरे मेध्ये बाली बाला तु टाप् स्त्रियाम्।।**

कल्पद्रुमे (पृ०४२२) यथा—घृतकुमारी, अम्बष्ठा, नीलझिण्टी, एकवर्ष वयस्कागौ:

**बाला स्त्री प्राणदा प्रोक्ता तरुणी प्राणहरिणी।**
**प्रौढाकरोति वृद्धत्वं वृद्धा मरणामादिशेत्।।**

**बिम्बोष्ठी:**—बिम्बफलवद्रक्तवर्णौ ओष्ठौ यस्याबिम्ब ओष्ठ इत्यत्र पररुपैकादेश: (वार्तिक १।१।६४) अत्र मेदिनीकार: (१०५।७)—

**बिम्बस्तु प्रतिबिम्बे स्यान्मण्डले पुन्नपुंसकम्।**
**बिम्बिकाया: फले क्लीवं कृकलासे पुन: पुमान्।।**

विश्वकोशे यथा—

**स्यान्मण्डले द्वादश राजके च देशे च विम्बे च कदम्बके च।**
**कुष्ठप्रभेदे प्युपसूर्यके च भुजगंभेदे शुनि मण्डल: स्यादि ति।**

ओष्ठ शब्दस्य व्याख्याधर प्रयोगेऽवलोक्या।

**ब्रह्मा**—बृंहति वर्धयति प्रजा: इति। बृहि वृद्धौ धातो: वृंहेर्नो ऽच्चेति मनिन्। (उ.४।१४६) धातोर्नस्यादादेश:। वृहंति वर्धते इति वा। अत्र मेदिनीकार:-

**ब्रह्मातत्वतपोवेदेना द्वयो: पुंसि वेधसि।**
**ऋत्विग् योगभिदोविप्रेचाध्यात्मज्ञानयोस्तथा।।**

**ब्रह्मर्षि:**—ब्रह्म वेदं ऋषति वेत्ति। वशिष्ठादि:। ब्रह्मा ऋषि: इत्यत्र ऋत्यक: वैकल्पिके ह्रस्वसमुचित प्रकृति भावे ब्रह्मऋषि पाक्षिके गुणे (पा०सू०६।१।८३) ब्रह्मर्षि एवमेव वाचस्पत्यादिषु (प०पृ०४५९९)।

रामायणो (रामायण १।६३) यथा–

**ब्रह्मणस्तु वचः श्रुत्वा विश्वमित्रस्तपोधनः।**
**प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच पितामहम्।।**
**ब्रह्मर्षिः शब्दमतुलं स्वार्जितैः कर्मभिः शुभैः।**
**यदि मेभगवान्नाह ततोऽहं विजितेन्द्रयः।।**

**ब्राह्मणी**–ब्राह्मणस्य स्त्री शार्ङ्गरवाद्योङीन् (पा०सू०४।१।७०)। ब्रह्मणः इयं वा। अत्र मेदिनी (५०।६७-६९)।

**ब्राह्मण ब्रह्म संधाते वेदमार्गेनपुसंकम्।**
**भूमिदेवे तु पुलिंगः पञ्झिकापुवकयोः स्त्रियाम्।**

अमरे यथा–

**हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका।**
**अंगारवल्ली वालेय शाकवर्वरवर्धकाः।**

कल्पद्रुमे (प०पृ०४७२) यथा-वरटी इति त्रिकाण्डशेषः। पिपीलिका भेदः तत्पर्यायः स्थूल शीर्षिकेति हेमचन्द्रः।

**भवत्**–भाति विद्यते भा धातोडवतु प्रत्ययः। भूधातोः शतृ प्रत्ययेनापि सिद्धयति। अस्य लिंगत्रये रूपाणि भवन्ति। यथा- भवान् भवन्ती भवत् इत्यादि। (१२।९७)।

एतद् विषये एवमेव कल्पद्रुमादिषु।

**भस्त्रफला**–भस्त्रेव फलानि यस्याः। भस्त्र शब्दस्य व्युत्पत्तिर्यथा-भस्यते अनया। भस् दीप्तौ धातौः हुयामाश्रुभासिभ्यस्त्रन् (उ०४।१६८) प्रत्ययः। अत्र कल्पद्रुमः (तृ०पृ० ४८८) चर्मप्रसेवकः इति भरतः। भस्त्राकाभस्त्राभस्त्री इति शब्दरत्नावली भस्त्रिकेति व्याकरणम्। फल शब्दविषये तत्रैवलोक्यः।

**भागधेयी**–भागधेय शब्दात् ङीप् (शब्द पृ० ४८८) भागधेय शब्दस्य व्युत्पत्तिर्यथा भाग एव। इत्यत्र भागरुपनामभ्यो (वार्तिक ५।४।३५) धेयः। इति धेय प्रत्ययः। अत्रामरः (१।४।२८) दैवंदिष्टं भागधेयं भाग्यं स्त्री नियतिः विधिः। भागेन धीयते इति व्युत्पत्तौ धा धातोः कर्मणि यत् प्रत्ययः तदर्थः राजकरः। तथाचामरः (२।८।२७) भागधेयः करो बलिः। प्रायः अन्येषामपि कोषकारणामेवमेव मतम्।

**भाजी**–भज्यते। श्राणार्थे जानपदकुण्ड (पा०सू० ४।१।४२) गोणस्थभाजे ति ङीप्। व्यञ्जनविशेषः। अन्यत्र भाजैव। एव मेव कल्पद्रुमादिषु। (ति०पृ०३६९)।

**भानुः–**भाति चतुर्दशुभवनेषु स्वप्रभयेति। भा धातोः दाभाभ्यानुः (उ०३।३२) इत्युनादिना नु प्रत्यये कृते निष्पन्नः भानु इति। अत्रहैमः (२।२८०) भानुरंशो रवौदिने। अस्य पर्यायः बहुपूषन् शब्दे दर्शनीयः। अत्र प्रायः सर्वेषां कोशकाराणं मतैक्यमस्ति।

**भास्करः–**भाः करोतीत। भाः उपपद कृधातो दिवाविभाभास्करे ति ट प्रत्ययः। सूर्यः अत्र कल्पद्रुमः (पृ०५१०) वीरः इति धरणिः अर्कवृक्षः इति राजनर्घिण्टः। भास्कराचार्यः। स च सिद्धान्त शिरोमण्यादि ग्रन्थकर्ता। मेदिन्या (१३६।१९१) यथा–

भास्करः अग्नौ प्रभाकरे। सूर्यस्य पर्यायः बहु पूषण शब्दे विलोक्यः।

**भूयः–**अतिशयेन बहुः। बहोलोपः (पा०सू० ६।४।१५८) भू च बहोः इति सूत्रेणास्य सिद्धिः। वाचस्पत्ये पुनरर्थे यथा व्युत्पत्तिः-भुवे भवाय यस्यति यतते वा क्विप्। अस्य पर्यायःवह्वी शद्वे विलोक्यः।

**भेषजी–**भेजष शब्दात्-केवलमामकभागधेयेति ङीप् प्रत्ययः। भेषज शब्दस्य व्युत्पत्तिर्यथा -भेषजयतीतिभेषः भेषृ भये धातेरच् प्रत्ययः। भेषं रोगं जयति इत्यत्रडः अन्येभ्योऽपीति (वा०३।२।१०१) भेष जयति वा। जै जये धातोः आतोऽनुपसर्गे (पा०सू० ३।२।३) कः। भिषज इदम् वा तस्येदमि (पा०सू० ४।३।१३१) त्यण्। अनन्तावसथेति भेषजादिति (पा०सू०/५।४।२३) निर्देशात् एत्वमित्यपि केचित्। अत्रामरः (२।९।५०)-

भेषजौषधभैषज्यान्यगदो जायुरित्यपि। प्राय अन्यत्राप्येवमेव।

**भोः–**भातीति। भा धातोः बाहुलकाड्डोसिः। अत्र कल्पद्रुमः हं हो हुं अरे अये अपि इति भरतः। प्रश्नः विषादः इति शब्दरत्नावली। अन्य पर्यायः पाट् शब्दे द्रष्टव्यः।

**भ्राता–**भ्राजते धातोः नृप्तृनेध्व इत्युणादिना तृन् प्रत्ययेन निपात्यते।

अत्रामरः (अम० २।६।३६)–भातृभगिन्यौ भ्रातारावुभो। कल्पद्रुमे (तृ०पृ०५५८) यथा-एकगर्भजातः भाई इति भाषा। तत्पर्यायः सोदर्यः समानोर्दयः सहोदरः सगर्भ्यः सहजः सोहदरः इति हेमचन्द्र एवमेवान्य कोशेषु। ज्येष्ठ भ्राता पितृतुल्यो भवति यथा गरूड़े (११४ अ०)–

**ज्येष्ठो भ्राता पितृतुल्यो मृते पितरि शौनक।**
**सर्वेषा स पिता हि स्यात् सर्वेषामनुपालकः।।**
**कनिष्ठस्तेषु सर्वेषु समत्वेनानुवर्तते।**
**समोपभोग जीवेषु यथैव तनयस्तथा।।**

**भ्रूः–**भ्रमति नेत्रोर्ध्वम्। भ्रमु चलने धातोः भ्रमेर्डः (उ०२।६८) प्रत्ययः। यद्वा भ्राभ्यति नेत्रोपरि इति व्युत्पत्तौ- भ्रमु अनव स्थाने धातोः क्विप् (पा०सू० ३।२।१७८)

प्रत्यये तत्तत् कार्ये निष्पन्नः। अमरे (२।६।९२) तत्परिचयो यथा–ऊर्ध्वे दृगभ्या भ्रुवौ स्त्रियां। कल्पद्रुमे (पृ०५६०)। यथा चिल्लिका नेत्रयो रुर्द्धभागरोमराजी इति राजनिर्घण्टः। प्राय एव मेवान्यत्र।

**मघवन्**–मह्यते पूज्यते। मह पूजायां धातोः श्वन्नक्षनपूषण् इत्युणादिना कनिन् प्रत्ययः निपातनात् ह्स्यघः अवुगागमश्च। अस्य पर्यायः इ इन्द्रः शब्दे द्रष्टव्यः। प्रयोगो यथा भट्टिः (१८।१९)।

हविर्जक्षति निःशको मखेषु मघवानसौ

**मतिः**–मन्यतेऽनया मननं वा। मन ज्ञाने धातोः क्तिन् (पा०सू० ३।३।९४) प्रत्ययः। अत्रहैमः (२।१८९) मतिः बुद्धिः इच्छयोः। बुद्धेः पर्यायः अथामरे (१।५।१)-

**बुद्धिर्मनीषा धिषणाधीः प्रज्ञाशेमुषी मतिः।**
**प्रेच्छोपलब्धिश्चित् संवित्प्रतिपज्ज्ञप्ति चेतना।।**

वाचस्पत्ये (प०पृ०४७२१) यथा–आर्यः शाकभेदे इत्यजयपालः। मेधाविनि इतिनिघण्टुः।

**मत्सी**–माद्यति। मदी हर्षे धातोः ऋतन्यान्जि (उ०४।२) इति स्यन् प्रत्यये। सति स्त्रीत्व विवाक्षायां ङीष् (पा०सू०६।४।१४०) प्रत्ययः तत्तत् कार्ये मत्सी। अत्रामरः (१।१०।१७)–

**पृथुरोमा झषोमत्स्यो मीनो वैसारिषोऽण्डजः।**
**विसारः शकली चेति।।**

मेदिन्या (११७।४५) यथा–मत्स्यो मीनोऽथ पुम्भूम्नि देशे। एवमेवान्य कोशेषु।

**मधु**–मन्यन्ते विशेषेण जानन्ति जनाः अस्मिन्। मन् ज्ञाने धातोः फलिपाटिनामिमानि (उ०.१।१९) जनां गुकूपटिनाकिधातश्चे त्युः धश्चान्तादेशः। अत्र मेदिनीकारः मधु पुष्परसे क्षुद्रे मद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्या तु याषिति। कल्पद्रुमे (च.५।९५ पृ.) यथा-क्षीरं जलमिति विश्वः हेमचन्द्रश्च। रसभेदः मधु इति शब्दरत्नावली मरन्दः मकमरन्दः इत्यपि शब्दरत्नावली। माक्षिकं कुसुमास्त्रवं पुष्पासवं पवित्र्यं पित्र्यं पुष्परसाह्वयमितिराजनिर्घण्टः। माध्वीकम् सारघं मक्षिकावान्तम् वरटीवान्तम् भृगंवान्त पुष्परसोद्भवमिति भावप्रकाशः। अस्य सामान्य गुणाःच शीतत्वं मृदुत्वं स्वादुत्वं त्रिदोषनाशित्वं कषायानु रसत्वम् रुक्षत्वचक्षुष्यत्वम् श्वासकासनाशित्वञ्च। पौष्टिकं भ्रामरम् क्षौद्रम् माक्षिकम् छात्रम् अर्घ्यम् औद्दलाकं दालम् इति। अशोकवृक्षः इति हेमचन्द्रः (२।१५३)।

**मथिन्**—मथ्यतेऽनेन। मथ बिलोडने धातोः इनिः (उ०४।११) च। केचित् मथिन् शब्दमन्यथा व्युत्पदयन्ति यथा पथिमथिभ्यामिन्निति, तदपाणिनीयम्। अत्रामरः (२।९।७४) वैशाख मन्थमन्थान मन्थानो मन्थदण्डके इति। मेदिन्या (७२।११) यथा- मन्थः स्या त्पुंसिमन्थाने सावतवे च दिवाकरे प्राय एवमेवान्यकोशेषु।

**मध्यमा**—बाल्ययौवनयोर्मध्ये भवा। मध्यान्मः (पा०सू० ५।३।८) प्रत्ययः। तयोर्मध्येमा शोभा यस्याम्वा। अत्रामरः (२।६।८) स्यान्मध्यमा दृष्टरजाः। अन्यदपि अमरे (२।६।८२) पुस्यगुंष्ठः प्रदेशिनी मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात्। मेदिन्यां (१११।४९-५१) यथा मध्यमे मध्यमेऽन्यवत्। पुमान् स्वरे मध्यदेशेऽप्यवल नेतु न स्त्रियाम्। स्त्रिया दृष्टरजोनार्या कर्णिकागुलिभेदयोः। त्र्यक्षर छन्दांसि तथा। हैमेनमध्यमो (३।५००-५०१) मध्यजेश्वरे। देहमध्ये मध्वदेशे मध्यमाकर्णिकांगुलिः राका रजस्वला चापि इति। कल्पद्रुमे (च०पृ०६१७) तु हृदयोत्थि बुद्धियुतनादरूप वर्णः। यथाअंलकारकौस्तुभः पश्चात् पश्यत्यथहृदयगो बुद्धियुङ्मध्यमास्यः। स्वीयाद्यन्तर्गत नायिका भेदः। तस्याः लक्षणम्। हिताहितकारिण्यपि प्रियतमे हिताहित कारिणीया सा। अस्यास्तु व्यवहारानुसारिणी चेष्टा इति रसमन्जरी। जम्बुभेदः तत्पर्यायो यथा-सूक्ष्मकृष्णफलाजम्बूदीर्घपत्रा च मध्यमा। इति वैद्यकरत्न मालायाम्। एतत् सर्वं कल्पद्रुमे एव निरूपितम्।

**मध्वरिः**—मधुः दैत्यः मधुशब्दस्य पर्यायाः मधुप्रयोगे द्रष्टव्यः। तस्य अरिःशत्रुः विष्णु आदि। अस्य पर्यायाः उपेन्द्रः प्रयोगे द्रष्टव्याः।

**मनाक्**—अव्य०। मननम्। मन् ज्ञाने धातो आक् प्रत्ययः। अत्रामरः (३।४।८) किन्चिदीषन्मनागल्पे इति। कल्पद्रुमकारेण (पृ०६१७)। तु मन्यते इति व्युत्पत्तिकृतातदपि उचितैव। यथा भागवते (१।१०।३५)।

**मरूधन्वमतिक्रम्य सौवीराभीरयोः परान्।**
**आनर्तान भार्गबोपागाच्छ्रान्त वाहोमनाग् विभुः।**

**मनायी**—मनोः स्त्री। मनु शब्दस्य व्याख्या मनु प्रयोगे द्रष्टव्या। मनु शब्दात् मनोरौवा (पा०सू०४।१।३८) इति ङीप् उदात्तैकारश्च। कल्पद्रुमः (शब्द पृ०६१७) मनोः पत्नी इति जटाधरः।

**मनावी**—मनोः स्त्री। इत्यत्र मनोरैवा (पा०सू०४।१।३८) इति ङीप् औकारश्चान्तादेशः। अत्र कल्पद्रुमे (श०पृ०६१७) मनुपत्नी इति मुग्धबोधव्याकरणाम्। यथा शतपथब्रह्मणे (१।१।४।१६) सा मनोरेव जायाया मनावीं प्रविवेश।

**मनीषा**—ईष गतिहिंसादर्शनेषु धातो गुरोश्च (पा०सू० ३।३।१०३) हलः इत्यप्रत्ययः। मनष ईषा। मनष् ईषा इति विग्रहे शकन्ध्वादित्वात् टेः पररूपम्। बुद्धिरर्थः अस्य व्याख्यामतिः प्रयोगे द्रष्टव्या। अस्य प्रयोगः यथा ऋग्वेदे (५।८३।१०) असमा क्षत्रमसमा मनीषा स्तुतिः। मनीषा स्तुतिमविद प्राप्यतवानासि इति तद्भाष्ये सायनः।

**मनुः**—मन्यते इति। मन ज्ञाने धातोः शृषृस्निति उः प्रत्ययः। ब्रह्मपुत्रः। स च प्रजापतिधर्म शास्त्रवेता। अत्रामरः (३।५।३८) मुनिर्वराटकः स्वार्तिवर्तको झाटलिर्मनुः। इति पुंलिगे अस्य निरूपणाम्। कल्पद्रुमे (शब्द पृ०६११)। यथा मनुष्यः इति शब्दरत्नावली। यथा ऋग्वेदे (ऋग्वेदे ८।४७।४) मनोर्विश्वस्य घेदिम आदित्याराय।

**मनुषी**—मनुष्यस्य स्त्री हैयगवयमुकय (पा०सू०४।१।६३) मनुष्यमत्स्वानामप्रतिषेधः इत्यस्य वार्तिकोत्या ङीष्। हलस्तद्धितस्येति (पा०सू० ६।४।१५०) यलोपः। अत्र कल्पद्रुमे (तृ०पृ० ६१३) मानुषी इति शब्दरत्नावली। मनुष्यशब्दस्य व्युत्पत्तिः यथा मनोरपत्यमिति विग्रहे मनोर्जतावयतौ (शब्द तृ०पृ०६१३) षुक् इति यत् षुगागमश्च।

**मनोरथः**—मनसः रथ इव। मन एव रथोऽत्रेति वा। मनस् रथः इत्यत्ररुत्वे कृते उत्वे रेफलोपे च विप्रतिषेधे (पा०सू० १।४।२) परं कार्यमिति रेफलोपे प्राप्ते पूर्वत्रासिद्धमिति (पा०सू० ८।२।१) रेफलोपस्यासिद्धत्वादुत्वमेव गुणेकृते मनोरथः। इच्छार्थः तथाचामरः (२।७।२७) अथ दोहदम्। इच्छाकाक्षांस्पट्टहेहा तृट्वाञ्छालिप्सा मनोरथः। कामोऽभि लाषस्तर्षश्चेति। यथा रघौ (११।५९)।

**इतस्ततश्च वैदेही मन्वेष्टुं भर्तृचोदिताः।**
**कपयश्चेरुरार्तस्यारामस्येव मनोरथाः।।**

कविविशेषः इति कल्पद्रुमे (पृ०६१४) यथा राजतंरगिण्याम् (४।५९।६) मनोरथः शंखदत्तश्चटकः सन्धिमांस्तथा। वभुवुः कवयस्तस्य वामनाद्यश्च मन्त्रिणः।

**मन्दाः**—मन्द शब्दात् स्त्रीत्व विवक्षायां टाप् प्रत्ययः सवर्णदीर्घः। अस्य परिचयो यथा कल्पद्रुमे (पृ०६२२) संकलित विशेषः। उत्तरा फाल्गुन्युतराषाढोत्तरभाद्रपदारोहिणी नक्षत्रेषु रवि संक्रान्तिश्चेत्तदा भवति। तस्याः सन्निहित दण्डत्रयस्य पुण्यतमत्वम्। मन्दशद्बस्य व्याख्या यथामरे (३।३।९५) मन्दस्तुन्दपरिसृजः आलस्य शीतकोऽलसाः।

**महत्**—मह्यते पूज्यते इति। मह पूजायां धातोः वर्तमानेपृक्तवृहन्। कर्मणि अति प्रत्ययः। अत्रामरः (उ०२।८४) विशकंटं पृथु वृहद्विशालं पृथुलं महत् वड्रारुविपुलमिति। अन्यच्चापि अमरे (३।१।६०) भद्राद् राज्यं च। कल्पद्रुमे (च०पृ०६५२) यथा पुलम् विस्तर्णमिति शब्दरत्नावली। यथारघौ (१२।४०) तस्मिन् राम शरोत् कृते बले महति

रक्षसाम्। तद्वैदिक पर्याय: ब्रघ्न: ऋष्व: वृहत् उक्षित: तवस: तविष: महिष: अम्बा: ऋभुक्षा: विहाया: यदह: ववचिथ विवक्षसे अम्मृण: गम्भीर: माहिन: ककुभ: रभस: ब्राघन् विरप्शी अद्भुतम् बर्हिष्ठ: बर्हिषत् इति पन्चविशतिम्महन्नामानि वेदनिघण्टौ। प्रकृतेराद्यो विकार: यथा सांख्यसूत्रम् सत्वरजतमसां सामावस्था प्रकृति:। प्रकृतेमहत् महतोऽहकार: इति।

**महाशूद्री**—महती च शूद्रा च। अत्र महत्पूर्वत्वात् न टाब् (पा०सू०४।१।४) किन्तु ङीषेव (पा०सू०४।१।६३) अत्रामर: अभीरी तु महाशूद्री जाति पुंयोगयो: समा। नृपात् शूद्रायामुत्पन्ना उग्रा तस्यां ब्राह्मणादुत्पन्ना। एवमेव कल्पद्रुमादिषु। (च०३७५)।

**मासंम्**—मन्यते। मन ज्ञाने धातो: मनोदीर्घश्चे (उ० ३।६४) तिस: दीर्घश्च। रक्तज धातुविशेष:। तत्पर्याय: यथामरे (२।६।६३) पिसितं तरसं मांसं पललं क्रव्यमामिषम्। कल्पद्रुमे (पृ०६८२) यथा-अभ्रजम् जांगलं कीर संवसांसगुणा: वातनाशित्वम् वृषत्वं बल्यत्वमित्यादि। मेदिन्या (१७०।८) यथा-

**मांस: स्यादामिषे क्लीवं कवकली जटयो: स्त्रियाम्।**
**मिसिल स्त्री मधुरामांस्यो: शतपुष्पाजमेदयो:।**

**मा**—अयं शब्दोऽव्ययोऽनव्ययंऽनेकार्थश्च। डि०दनुबन्धात् दैवादिकात् आदादिकाद्वा मा धातो: क्विप् (पा०सू० ३।२।१७८) प्रत्यय:। अत्रामरे (३।४।११)। मास्म मात्रं च वारणे यथा रामायणे (१।२।२५)।

**मा निषाद प्रतिष्ठात्वमगम: शाश्वती: समा:।।**

मेदिन्यां (१०८।१) यथा- मा स्त्री पद्मालयायां स्यात् पुलिंगश्चन्द्रशेखरे। अन्यच्च तत्रैव मा वारणे विकल्पे च स्मार्त ते पादपूरपूरणे। स्यान् मंगले परकृतौ। इति। कल्पद्रुमे (पृ०६८२) यथा-मानम् इत्येकाक्षरकोश:। एवमेवान्य कोशेषु।

**माता**—मान्यते पूज्यते या। मान पूजायं धातो: अथवा माति गमो अस्याम् मा-माने धातो: नप्तृने (उ० २।९५) त्युणादिना निपातित:। अत्रामर: (२।६।२९) जनयितृ प्रसूमाता जननी ति। अपरश्च (१।७।१४) अम्बा मातेति अन्यच्च (अमर १।१।३५) ब्राह्मीत्याद्यास्तु मातर:–

**ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।**
**बाराही च तथेन्द्राणि चामुण्डा लोकमातर:।।**

अन्यच्चतत्रैव (अमर २।९।६६) माहेयी सौरभेयी गौ: उस्रामाता चश्रृगिणी अर्जुनघ्न्या रोहिणी स्यादिति।

कल्पद्रुमे (तृ.पृ.६९१) तु निपातनाड्डातृ प्रत्ययेन निष्पत्तिः। तत्र अधिकार्थः शब्दा यथा–

विभूतिः इति शब्दरत्नावली। रेवती इत्यजपालः। आखुकर्णी इन्द्रावरुणी महाश्रावणी जटामांसी इति राजनिर्घण्टः। परिमाणकर्तरिनिर्माणकर्त्तरि च।

**मातुलानी–**मातुलस्य स्त्री०। पुंयोगादिति (पा०सू० ४।१।४८) ङीष्। आनुगामेवैकल्पिके (वा० ४।१।४९) मातुलानी आनुगभावे मातुली। तथा चामरः (२।६।३०) मातुलानी तु मातुली। अमरे (२।९।२०) अन्यच्च यथा मातुलानी त भंगायायाम्। एवमेव कल्पद्रुमे (पृ०६९३)।

भङ्०गा जया मातुलानी मादिनी विजयाजया। अन्यच्च तत्र यथा-

शरणः इति हेमचन्द्रः। प्रियंगुवृक्षः इति शब्दचंद्रिका।

**मार्तण्डः–**मृतमण्डं यस्य सः मृतण्डः कश्चिदृषिः। मृत+अण्ड इत्यवस्थायां पररुपम्। (मे०४३।३५) ततः अपत्ये अणि कृते मार्तण्डः। कोशेषु यथा व्युत्पत्तिः मृते अण्डेभव इति। अस्य पयार्यः भानु प्रयोगे द्रष्टव्यः। अत्र मेदिनीकारः (४३।३५) मार्तण्डः क्रोडसूर्ययोः इति। सूर्यजन्म यथा मार्कण्डेय पुराणे मारितञ्च यतः प्रोक्तमेतदण्डं त्वयोदित। तस्मान्मुने मतस्तेऽयं मार्तण्डाख्यो भविष्यति। इति वाचस्पत्ये (पृ०४७५१)। निरूपितम्। तत्र अर्कवृक्षः इति अमरः। शूकरः इति मेदिनी।

**मासः–**मस्यते परिमीयते यम् अनेन वा। मसी-परिमाणे धातोः कर्माणिघञ् (पा०सू० ३।३।१९) हलश्चेतिवा। (पा०सू०३।३।१२१)। अत्रामरः (१।४।२) शुक्लकृष्णपक्षद्वयात्मकः कालः। स च चैत्रादि द्वादश सञ्ज्ञकः। अत्र कल्पद्रुमः (च.पृ.७२१)। मस् परिमाणे धातोः भावे घञ् प्रत्ययः। माष परिमाणम्। इत्यगर टीकायां भरतः। मासोद्विधा सौरश्चान्द्रश्च। तत्र चान्द्रस्येयं व्युत्पत्तिः माश्चन्द्रः तस्यायं मासः। सौरादिषु तु। पूर्वेव व्युत्पत्तिः। माः सान्तोऽपि। मास्तु मासोऽपि दृश्यते इति भरतः। एव मेवमन्यकोषकाराणां मतम्।

**माहात्म्यम्–**महात्मनो भावः। महात्मन् शब्दात् ष्यञ् प्रत्ययः। अत्र कल्पद्रुमः। महात्मन महिमेति यावत्। यथा तिथ्यादितत्वे माहात्म्यं भगवत्याश्च पुराणदिषु कीर्तितम्। पाठस्तस्य जपः प्रोक्तः पठेद्देवीम् नरस्ततः। हलोयमां यमि (पा०सू० ८।४।६४) लोपः इति सूत्रे यमां यमि इति यथा संख्य विज्ञानात् नेह मकार लोपः।

**मिथः–**मेथति। मेथृ संगमे धातो असुन् (उ.४।१८९) प्रत्ययः पृषोदरादित्वात् ह्रस्वः। अत्र मेदिनीकारः (१८६।८३) मिथोऽन्यान्ये रहस्यऽर्थे च इति। अमरेऽपि

(३।४।२५६) एवमेव यथाऽमिथोऽन्योन्यं रहस्यपि। प्राय: अन्येकोशकारा: एवमेव उक्तवन्त: यथा मनु: (१०।५३) व्यवहारी मिथस्तेषां विवाह: सदृशै: सह।

**मिथो**–अन्यमपि मिथ: वदेव।

**मिथ्या**–मथ्यते। मथ विलोडने धातो: मेथते हिनस्ति वेति। अघ्न्यादित्वात् निपातनात् (उ० ४।१।२) साधु:। अत्रामर: (३।४।१५) मृषामिथ्या च वितथे इति। एवमेवान्य कोशकारणांमतम्।

**मुकुन्दः**–मुक्तिं ददाति। डुदाञ् दाने धातो: (पा०सू० ३।२।३) क: प्रत्यय: पृषोदरादित्वात् साधु:। अत्रामर: (१।१७१) भेदा: पदम्शंखादयो निधे:। महापद्मश्च पद्मश्च शंखो मकरकच्छपौ। मुकुन्द कुन्द नीलश्च खर्वश्चनिधयो नव। अन्यञ्च (अम० २।४।१२१) अथ पालकया मुकुन्द कुन्द: इति विष्णु अर्थे कृष्णशब्दे पर्याय: द्रष्टव्य:। मेदन्यिां (७७।३८) मुकुन्दो निधिभिद् विष्णुरत्नभेदे च कुन्दुरौ इति। कल्पद्रुमे (च०पृ०७२९) यथा-विष्णु तस्यव्युत्पत्ति: यथा।

**मुकुमव्ययमान्तञ्च निर्वाणमोक्ष वाचकम्।**
**तद्दाति च यो देवो मुकुन्दस्तेन कीर्तितः।**
**मुदं भक्तिरसप्रेमवचनं वेदसम्मतम् ।**
**यस्तद्ददाति विप्रेभ्यो मुकुन्दस्तेन कीर्तितः।**

इति ब्रह्मवैवते श्रीकृष्णजन्मखण्डे ११० अध्याये प्राय: अन्येऽपि कोशकारा एष्वर्थेषु सम्मता: सन्ति।

**मुण्डा**–मुण्ड शब्दात् जातित्वाभावात् न ङीष् अत: टाप्। मुण्डशब्दस्य व्युत्पति: यथा मुण्ड्यते इति। मुडिखण्डने धातो: घञ् प्रत्यय:। अत्रामर: (२।६।४८) मुण्डस्तु मुण्डिते। हैमेन (२।१२८) यथा मुण्डो मुण्डितशीर्षयो:। राह्वौ दैत्यान्तरे इति। मेदिन्या (४२।२३) यथा मुण्डो दैत्यान्तरे राहुग्रहे ना मुण्डिते त्रिषु मुण्डा मुण्डीरिकायां स्यात् स्त्रियामस्त्री तु मूर्द्धिनि। मुण्डिता स्त्रीत्यर्थ:। अन्येऽपि कोशकारा: एष्वर्थेषु सम्मता:सन्ति:।

**मुधा**–मुह्यतीति। मुह् वैचित्ये धातो: बाहुलकात् का प्रत्यय:। पृषोदरादित्वात् ह्स्य ध:। अत्रामर: (३।४।४) व्यर्थके तु वृथा मुधा। प्राय अन्यैरपि कोशकारै: एवमेव कथितम् यथा महाभारते (१४।३७।५)-

**मुधा ज्ञानं मुधा वृत्तं मुधा सेवा मुधाश्रमः।**
**एवं यो युक्त धर्मः स्यात् सोऽमुत्रात्यन्तमश्नुते।**

**मुहुः**—मोहनम्। मुह वैचित्येधातोः डषि किच्च (उ.२।१२) अस्य पर्यायः यथामरे (४।४।१) मुहुः पुनः पुनः शश्वदभीक्ष्ण मसकृत् समाः इति। एवमेवान्यकोशकाराणां मतम्। अस्य प्रयोगः यथा पञ्चदश्या (७।१७१)-

**स्वस्वप्नमापरोक्षेण दृष्ट्वा पश्यन् स्व जागरम्।**
**चिन्तयेदप्रमत्तः सन्नुमावनुदिनं मुहुः।।**

**मूषिका**—मुष्णातीति। मुष् स्तेये धातोः मुष्णातेदीर्घश्च (उ० २।४२) किकन् प्रत्ययः। मूषिक शब्दात् टाप् (पा०सू० ४।१।४) अत्रामरः (२।५।१२) उन्दुरुमूषिको प्याखुः। अधोगन्ता तु खनकोवृकः पुंध्वज उन्दुरः।

**मृदुः**—म्रद्यते म्रदितुं शक्यते इति मृद् क्षोदो धातो प्रथिमृदिभ्रस्जामिति कुः (उ.१।२८) सम्प्रसारणम्। केचित्तु मृगयादित्वात् (उ० १।३७) सम्यादयन्ति तन्न समीचीनम्। अत्रामरः (३।१।७८) सुकुमारं कोमलं मृदुलं मृदु। अन्यच्च (३।३।९४) मृदु चातीक्ष्ण कोमले इति। मेदिन्यामपि (७५।१४) एवमेव यथा मृदुः स्यात् कोमले तीक्ष्णे इति। एवमेव हैमेनापि (२।२३६) अत्र कल्पद्रुमः (च०पृ०७७४) मृदौ ज्वरे लघौ देहे प्रचलेषुमलेषु च इति वैद्यकचक्रपाणि संग्रहे ज्वराधिकारे। गृह कन्यायां स्त्री इति राजनिर्घण्टः। नृपञ्जपराजपुत्राः इति विष्णुपुराणे। वाचस्पत्ये (पृ०४७६२) यथा चित्रानुराधा मृगरेवती नक्षत्ररूपे नक्षत्र गणभेदे।

**मद्वी**—मृदु शब्दात् स्त्रीत्व विवक्षायां वोतोगुणवचनादिति (पा०सू०४।१।४) वैकल्पिके ङीष् प्रत्ययः। पर्यायः मुदुशब्दे द्रष्टव्यः। अत्र कल्पद्रुमे (पृ० ७७४) कोमलांगी इति मुग्धबोध व्याकरणम्। अपि च।

**सद्यः पुरीपरिसरेषु शिरीष मृद्वी।**
**सीता जवात्रि चतुरानि पदानि गत्वा।**
**गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा।**
**वामाश्रुणः कृतवती प्रथमावतरम्।।** इति महानाटकम्।।
कपिलद्राक्षा इति राजनिर्घण्टः।

**मृषा**—मृष्यते। मृषु सहने धातोः का प्रत्ययः। अस्य पर्यायः मिथ्या शब्दे द्रष्टव्यः। यथानैषधः (१।६८) चरिते मृषामृथं सादिवले कुतूहलान्नलस्य नासीर गते वितेने।

**यकृत्**—यमनम्। यम धातोः क्विप् (३।३।१०८) गमादीनामिति (वा०६।४।४०) मलोपः। तुगाममश्च (पा०सू० ६।१।७१)। कुक्षेर्दक्षिणभागमिति। तथा चामरः (२।६।६६) कालखण्ड यकृत तु समेइमे। कल्पद्रुमः (च०पृ०१) यज धातोः शके ऋतिन्नित्युणादिना

(उ०४।५८) बाहुलकात् यजेकश्चेत्युज्वलेत्त्या ऋतिन् जस्य च कः। कालखञ्जम् कालेयम् कालकमिति हेमचन्द्रः। करुणा महास्नायुः इति रभसः।

**यज्वन्**—यजते स्म यज् धातोः सुयजोङ्वनिप् (पा०सू० ३।२।१०) इति ङ्वनिप् प्रत्ययः। अत्रामरः (२।७।८) यज्वा तु विधिनेष्टवान्। प्राय एवमेवान्य कोशेषु।

**यत्र**—अव्य०। यस्मिन्निति। यत् शब्दात् सप्तम्यास्त्रल् प्रत्ययः। इति कल्पद्रुमे (पृ०१२)।

**यथाकथाच**—अव्य। संघातोऽयमनादरे।

**यद्**—यद् गर्हा हेत्ववधृत्येपरि गर्हविकल्पयोः।

**यशः करोति**—समासत्वाभावात् अतः कृकमि कुम्भ पात्र (पा०सू०८।३।४६) कुशाकणीष्वनव्ययस्येतिन सत्वम्। यशः शब्दस्य व्युत्पतिः यथा अश्नुते व्याप्नोति इति। अशू व्याप्तौ धातोः अशेदेवने युष्टच (उ०४।१९१) इत्यसुन्युट् च। अत्रामरः (१।६।११) यशः कीर्तिः समज्ञा चेति। कल्पद्रुमे (च०पृ०२६) यथा समाख्या कीर्तना अभिख्यानम् आज्ञा समज्या इति शब्दरत्नावली। दानादि प्रभवाकीर्तिः शौर्यादि प्रभवं यशः। इति माध्वी। अतएव यशः कीर्तयोः भेदस्यापि दर्शनात्। यशः कीर्ति परिभ्रष्टो जीवन्नपि न जीवति। इति कस्याचित् प्रयोगः।

**याता**—यततेऽन्योन्यभेदायेति। यती प्रयत्ने धातोः यते (उ०३।९७) वृद्धिश्चे ति तृन् प्रत्ययः। अत्रामरः (२।६।३०) भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्। यथा साहित्य दर्पणे (सा०द०३७८)–

स्वामीनिश्वसितेऽप्यसूयति मनोजिघ्रः - सपत्नी जनः।
श्वश्वरिगिंतदैवतं नयनयोरीहालिहायातरः इति।
या धातोः तृच् प्रत्यये सतिगमनकर्तारि त्रिलिंगः।

यथा वृहत् संहितायाम् उल्का शुभदापुरुतो दिवाकर विनिःसृता यातुः। सारथ्यादिः यथा मनौ यानस्य चैवयातुश्च यानस्वामिन एव वा। दशतिवर्तमान्याहुः शेष दण्डो विधीयते। यातुःसारथ्यादेः कुल्लकः हन्ता। यथा ऋग्वेदे अहेर्यातरं कमपश्य इन्द्रे। याता रं हत्वारभिति तद्भाष्ये सायणः।

**यादृशी**—य इव दृश्यते। दृश् धातोः त्यदादिषु (पा०सू० ३।२।६०) दृशः इति कञ् प्रत्ययः। आसर्वनाम्नः (पा०सू०६।३।९१) इत्याकारादेशः टिड्ढाणञ्द्वयसजिति ङीप् प्रत्ययः। एवमेव कल्पद्रुमे (च०पृ०३०९)।

**यावत्**—यत् परिमाणमस्य। तद्धिता: (पा०सू० ४।१।७६) इति बहुवचनेनान्येऽनुक्ता अपि तद्धिता: ज्ञापिता तेन डावतु प्रत्यय:। अत्रामर: (३।३।२४६) यावत्तावच्चसाकल्येऽवधौ मानेऽवधारणे इति। मेदिन्या (१८१।३१-३२) यथा यावत् कार्त्स्न्येऽवधारणे। प्रशंसायां परिच्छेदे मानाधिकार सम्भ्रमे। पक्षान्तरे च।

**युगपत्**—युवन्त्यस्मिन् काले। यु मिश्रणेऽमिश्रणे च धातो: गपतक् प्रत्यय:। युगं पयतेऽस्मिन् इति व्युत्पत्तौ पय गतौ धातोऽत् प्रत्यय:। अत्र विशेष: यु धातो: गपतक् प्रत्यये तकारान्तस्य युगपत् इति शब्दस्य सिद्धौ अव्ययं विभक्ति (पा०सू० २।१।६) इति सूत्रोक्त योगपद्य शब्देऽपि दकार श्रवणं न स्यात् तस्मादिह गपतक् प्रत्ययो वाच्य:। इत्यमरस्य (३।४।२२) रामाश्रमी टीकाया: टिप्पणौ। तत्र पर्याय: यथा युगपदेका इति।

**युवतिः**—यौतीति। यु मिश्रणे धातो:कनिन्युवृषि (उ०१।१५६) इति कनिनप्रत्यय:। यूनस्ति: (पा०सू० ४।१।७७) तिप्रत्यय:मध्यमवयसि वर्तमानेत्यर्थ:। यथामरे (अम०३।६।८) तरुणी युवति: समे वाचस्पत्ये (पृ०४७७९) यथा- हरिद्रियामिति शब्दचन्द्रिका। प्राय: अन्येषामपि कोशकाराणामेवमेव मतम्।

**युवन्**—यौतीति। यु मिश्रणे धातो: कनिन्युष वृषितक्षि (उ०१।१५६) इति कनिन् प्रत्यय:। अत्रामर: (२।६।४८) वयस्य तरुणो युवा मेदिन्यां (८१।११) यथा युवा स्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि अत्र वाचस्पत्ये (पृ०४७७९) आषोडशाद् भवेद् बाल: तरुणस्तत उच्यते इत्युक्त वयस्के तरुणे च जीवति तु वंश्ये युवा।

**युष्मद्**—योषति भजतीति। युष धातो युष्मसिभ्या (उ०१।३९) मदिक् इत्युणादिना मदिक् प्रत्यय:। सर्वनामशब्द: अत्र वाचस्पत्ये (पृ०४७९९) यथा सम्बोध्य चेतने भवच्छद्वार्थे। उक्तार्थे सर्वनाम। त्रिषु लिंगेषु समरुपता च। प्राय: अन्येऽपि कोषकारा: एतद् विषय एवमेव उक्तवन्त:। यथा मुक्तिवादे गदाधर:

**युष्मत् कृते खञ्जन गञ्जनाक्षि शिरो मदीयं यदि याति यातु।**
**नीतानि नाशं जनकात्मजार्थं दशाननेनापि दशाननानि।**

**यूष**—यूषति। इगुपध (पा०सू०३।१।१३५) इति क प्रत्यय: कवियं कपासं बारम्बारं युगन्धरम् मण्ड:। जूस इति भाषायाम्। यूपं प्रागीव पावे यूष चमसाचिक्कसौ। अत्र वाचस्पत्ये (पृ०४७८०) यथा–

**अष्टादश गुणेनीरे शमीधान्यशृतोरस:।**
**विरतान्य धन: किन्चित् पेयतो यूष मुच्यते।**
**उक्त: स एव निर्यूहो रूचि कृच्चविशेषत्त:।**

यूषस्य प्रकारतरमाह कल्क द्रव्यपलं शुद्धीपिप्पलीन्चार्धकर्षिकी वारिप्रस्थेन विपिचेद् तद्भवो यूष उच्यते। इत्यादि। अन्यैरपिकोशकोरे: एवमेव उक्तम्।

**रज्जुः**—सृज्यते रज्यते इति। सृज् विसर्गे धातोः सृजेरसुं (उ०१।१५) च इति उः। असुगागमश्च। धातुसकारलोपश्च तस्यापि चुत्वं जकारः। अत्र केचितु अन्यथा व्युत्पत्तिं कुर्वन्ति यथा सृजेः कुसुगागमश्च इत्यादि तदपाणिनीयम्। बन्धनसाधनम् इत्यर्थः अत्रामरः (२।१०।२७) शुत्तवं वराटकं स्त्री तु रज्जुस्त्रिषु वटी गुणः। मेदिन्या (३०।१४) यथा रज्जुर्वैण्या गुणे योषित्। एवमेवविश्वकोशेऽपि (विश्व ३३।१४) कल्पद्रुमे (च०पृ०८५) शुक्ला इति भरतधृतरत्नकोषः। शुल्वम्। शुल्वः शुल्वा शुल्वी सुष्मम् वराटः वहाकारः वहीगुणाः इति टीकान्तरम्। प्रत्यङ्०ग विशेषः। यथा सुश्रुते शरीर स्थाने ५ अध्याये रज्जवः सेवन्यः संघाताः। यथा रामचरितमानसे रज्जौ यथाहेभ्रमः। बालकाण्डे मङ्गलाचरणे षष्ठ पद्ये।

**रमेशः**—रमायाः लक्ष्म्याः ईशः प्रभुः स्वामीत्यर्थः। रमा ईशः इत्यत्र आकारस्य इकारस्य च स्थाने एकोगुण एकारः। विष्णुःअर्थः। अस्य पर्यायः कृष्णःशब्देद्रष्टव्यः।

**रमा**—रमयतीति। रमु क्रीडायां धातोः णिजन्तात पचाद्यच् प्रत्ययः। ततः टाप् सवर्ण दीर्घः। लक्ष्मीत्यर्थ तथाचामरः (१।१।२७) लक्ष्मीः पद्मालया पद्मा कमला श्रीहरिप्रिया। इन्दिरालोकमाता माक्षीरोदतनया रमा। भार्गवी लोकजननी क्षीरसागरकन्यका। मेदिन्या। (११०।२५) यथा रमा लक्ष्म्याम् इति। कल्पद्रुमे (च०पृ०९५) यथा शशिध्वजराजकन्या। सा कल्किदेवेन विवाहिता यथा ततः शशिध्वजो राजा युद्धादाहूय पुत्रकान्। सुशान्ताया मति रमां प्रादात् सकल्कये इति कल्किपुराणे २५ अध्याये। शोभा इति राजनिर्घण्टुः। गङ्गा। यथा काशीखण्डे (२९।१५४) रेवतीरतिकृद् रम्या रत्नशर्मारमा इति। प्रायः एवमेवान्यकोशेषु।

**रविः**—रुवपतेस्तूयते रवते वा। रुशब्दे रुङ्० गतौ वा धातोः अचइ० (उ० ४।१३-८) इ प्रत्ययः सूर्योऽर्थेः। अस्य पर्यायः भानुः प्रयोगो द्रष्टव्यः।

**राका**—राति शुभम्। रा दाने धातोः कृदाधारार्चिकलिभ्यः (उ०३।४०) कः इति क प्रत्ययः बाहुलकाद् ह्रस्वो न भत्वभावात् नेत्वम् प्रत्ययस्थादिति (पा०सू० ७।३।४४)। स्त्रीत्वं लोकात् ततः टाप् प्रत्ययः। अत्रामरः (१।४।८) पूर्णे राका निशाकरो मेदिन्यां (३।२२) यथा- राका नद्यन्तरे कच्छ नवजात रजः स्त्रियाम। सम्पूर्णेन्दु तिथौ इति। यथा- ऋग्वेदे (२।३२।४) शकामहंसुहवा सुष्टुती हुवे। शृणोर्तुनः सुभगा बोधुतात्मना। सम्पूर्णचन्द्रा पौर्णमासी राका इति तद् भाष्ये सायणः। कल्पद्रुमे (पृ०१०९) यथा-राक्षसीविशेषः। साच खरश्च सूपर्णखा याश्च जननी अस्याकथा महाभारते।

**राजा**—राजति। राजृधातोः कनिन् (उ०१।१५४) प्रत्ययः। यथामरे (२।८।२) राजार्थे राज्ञि राट् पार्थिवक्ष्माभृतभूपमहीपतिः। राजा तु प्रणताशेष सामन्तः स्यादधीश्वरः। इति। मेदिन्या (९१।१३५)। यथा राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। पक्षे शक्रे च पुंसि स्यात् इति। वाच स्पत्ये (पृ० ४८०१) यथा उत्तरस्थपदः पूर्व पदस्थञ्च समभिव्याहित पदार्थ श्रेष्ठ वाचकः। यथा राजभाव मुनिराज इत्यादि। पृथु नृपे च। पित्रानुरञ्जितास्तस्य प्रजास्तेनानुरन्जिताः। अनुरागात् ततस्तस्य नाम राजेत्यभाषत।

**रात्रिः**—राति सुखम्। रा दाने धातोः राशादिभ्या (उ०४।६७) त्रिप् इति त्रिप् प्रत्ययः। अत्रामरः (१।४।४) निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा। विभावरी तमस्विन्यौ रजनी यामिनी तमी। इति। कल्पद्रुमे (च०पृ०१४६) यथा-श्यामाघोरा याम्यातुंगी नक्तम् दोषावासतेयी तमा क्षमा शताक्षा निशिथ्या चक्रभेदिनी शर्वरी शय्या वासुरा निषद्वरी इति शब्दरत्नावली। वसतिः वायुरोषा निशीथः नित् इति जटाधरः। यामवती ताराभूषा ज्योतिष्मती ताराकिणी काली कलाविनी इति राजनिर्घण्टः। तस्या कारण यथा यदा दिक्षु च अष्टासु मेरोर्भूगोलकोद्भवा। छायाभवेत् तदारात्रिः स्याच्च तद्विरहाद्दिनम्। इति बह्निपुराणे गणभेदीनामाध्याये। कल्पद्रुमे हरिद्रापि अर्थः।

**रात्रीः**—रात्रि शब्दात् ङीष् प्रत्ययः। प्रयोगे यथा शब्दार्णवे रात्रौ रात्रिस्तमस्विनी यथा ऋग्वेदे रात्री व्याख्यत् आयती पुरुत्रा देत्यक्षभिः। पर्यायः रात्रिप्रयोगे द्रष्टव्यः।

**रामः**—रमते रमु क्रीडायाम् धातोः ज्वलितिकसन्तेभ्यो (पा०सू० ३।१।१४०) इतिणः प्रत्ययः। रमन्ते योगिनः अस्मिन् वा हलश्चेति (पा०सू०३।३।१२१) घञ् प्रत्ययः। केचित्तु अन्यथाव्युत्पादयन्ति तन्न समीचीनतामर्हति यथा रमयति मोदयति प्रजा रूपमस्येति। णिजन्तस्य ज्वलादित्वाभावात् प्रत्ययान्तानां धात्वन्तरत्वात्। अत्र मेदिनीकारेण (११०।२६-२७) यथा रामायोषाहिङ्गुनद्योः क्लीवं वास्तूककुष्ठयोः। ना राघवे च वरुणे रैणुकेये हलायुधे। हये च पशुभेदे च त्रिषु चोरसितेऽसिते। श्रीरामध्यानं यथा

**ध्यात्वा नीलोत्पल श्यामं रामं राजीवलोचनम्।**
**जानकी लक्ष्मणोपोतं जटामुकुट मण्डितम्।**
**सासितूणधिनुर्वाण पाणिं नक्तन्चारान्तकम्।**
**स्वलीलयाजगत् त्रातुमाविर्भूतमजं विभुमित्यादि।।**

**राष्ट्रम्**—इत्यत्र त्रिप्रभृतिषु शाकटायनस्ये (पा०सू०८।४।५०) ति वैकल्पिके षकार स्यद्वित्वे राष्ष्ट्रम्। पाक्षिके राष्ट्रम्। अस्य व्युत्पत्तिः यथा राजते इति। राजृदीप्तौ धातोः सर्वधातुभ्यः (उ०४।१५८) ष्ट्रन इति ष्टन् प्रत्ययः। अत्रामरः (३।३।१८४)

अथराष्ट्रोऽस्त्रीविषये स्यादुपद्रवे। मेदिन्यां (१२८।७८-७९) यथा राष्ट्रस्याहुपवर्तने उपद्रवे क्लीव पुंस। अन्यदपि अमरे-

**स्वाम्यामात्य सुहृत्कोष राष्ट्रदुर्गबलनानि च।**
**राज्यागांनि प्रकृतयः पौराणांश्रेणयोऽपि च।।**

**रोहिणी–**रोहित शब्दात् स्त्रीत्व विवक्षायां वर्णदनुदात्तात्तापधातो (पा०सू०४।१।३९) नः इति ङीप् नकारादेशश्च। अत्र मेदिनीकारः (५०।७४) रोहिणी कण्ठ गमिदि तडितकटम्भरा सोमवल्केषु लोहिता गवोः। गोः पर्यायः यथामरे (२।९।६७)–

**माहेयी सौरभेयी गौरुस्रा माता च शृंगिणी।**
**अर्जुनधन्या रोहिणी स्यादिति।।**

**रोहिता–**रोहित शब्दात् ङीप् ना भावे टापि रुपम्। रोहितशब्दस्य व्युत्पत्तिः यथा रोहति। रुह बीजजन्मनि प्रादुर्भावे च धातोः रहेरश्च लो वा (उ० ३।९४) इतीतन्। अत्रामरः (१।५।१५) रोहितो लोहितो रक्तः। अन्यदपि (अम०१।३।१०) इन्द्रायुध शक्र धनुः तदेव ऋजु रोहितम्। हरिन्द्र धनुरुत्पातदिना ऋजु अवक्रं सद्रोहितं स्यात्। तत्रान्यापि व्युत्पत्तिः शक्या यथा रोहता रोहः सञ्जातोऽस्येति इतच् (पा०सू० ५।२।३६) प्रत्ययः अन्यदपि (अम०१।१०।१९) अथो झषाः रोहितोमद गुरुः शालो राजीवः शकुलस्तिभिः। तिमिंगिला दयश्च अन्यदपि (अम० २।५।१०) कृष्णसार रुरुन्युकुरकुंशंवर रोहिषाः। गोकणं पृषतैणर्श्य रोहिताश्चामरः मृगाऽइति। एवमेव मेदिन्या (६५।१४६-४७) यथा रोहितं कुकुंमे रक्ते ऋजुशक्रशरासने। पुंसि स्यान्मीनमृगयाभेदे लोहित कद्रुमे। इति। (देवीभाग०७।१५।१५) यथा स्वनामाख्यातो हरिश्चन्द्रस्य नृपतेः पुत्रः। राजा पुत्रसुखं दृष्ट्वा सुखभाव महत्तरम्। नामास्य रोहितश्चेति चकार विधिपूर्वकम्। अग्नि घोटकः इति निघण्टु (१।१५)। तत्र व्युत्पत्तिः यथा रोहिन्ति आरोहन्ति रथं वहन्त्यादिवमिति। तत्र देवराजयज्वा। यथा ऋग्वेदे (१।९४।१०) यदुयुवथा अरुषारोहिता रथे रोहिता लोहितवर्णौ रोहित इत्यग्नेरश्वस्याख्या रोहितोग्नेरिति दर्शनात् रोहित्वेनाग्निदेवता गमयत्वितिमन्त्रवर्णाच्च इति तद्भाष्ये सायणः। एवमेवान्य कोशेषु।

**रै–**राति सुख रायते वा। रा दाने धातोः रातेडैः (उ०२।६६) प्रत्ययः धनमर्थः। यथामरे (अम० २।९।९०) द्रव्यं वित्तं स्वापतयेम् रिक्थमृक्थं धनं वसु हिरण्यं द्रविण द्युम्नमर्थरैविभवा अपि। अन्यच्चामरे (अम०३।१६७) स्वर्गेऽपि राः।

◆◆◆

# चतुर्थोऽध्याय:

**लक्ष्मी:**—लक्षयती पश्यति उद्योगिनं नीतिज्ञं या।

लक्षदर्शनांकनयो: धातो:लक्षेर्मुट् (उ०३।१।६०) ई च। इति ई प्रत्यय: तस्य मुडागमश्च। अस्य पर्याय: रमा प्रयोगे द्रष्टव्य:। अन्यच्चामरे (२।८।८१-८२) अथसंपदि। सम्पत्ति: श्रीश्च लक्ष्मीश्चेति। अन्यच्च (अम०१।४।११२) योग्यमृद्धि: सिद्धि लक्ष्म्यो वृद्धेरप्याह्वया इमे इति। मेदिन्या (११०।२८) यथा लक्ष्मी: सम्पति शोभयो:। श्रद्यौषधे च पद्माया वृद्धिनामौपधेऽपि च इत्यादि। शब्दकल्पद्रुमेऽन्योऽपि (च०तृ० १७६) पर्याय: यथा जलधिजा भार्गवी इति शब्दरत्नावली। हरिवल्लभुदुग्धाधितनयाक्षीरसागरसुता इतिकविकल्पलता।

**लाङ्०गलीषा:**—लाङ्गल ईषा इत्यत्र शकन्ध्वादित्वात् (वा०१।१।६४) पररुपम् लाङ्०ल शब्दस्य व्युत्पत्ति: यथा-लङ्ग०तीति। लगि गतौ धातो: बाहुलकात् कलच् प्रत्यय: स्वनामाख्यातभूमि कर्षणयन्त्रम् तथाचामर: (०२।९।१२) लाङ्ग०लं हलं गोदारणं च सरि:। अन्यदपि अमरे (३।३।२३) भयामृत शकृद् वक्त्र चापाभारण लाङ्०लम्। कल्पद्रुमे (च०तृ० २१४) यथा हल: हालम् हाल: शीर: इति भरत:। यथावाजसनेय संहितायाम् (१२।७१) (लाङ्०गलं प्रवीर खत् सुशेव सोमपितसरु) लिंग इति त्रिकाण्ड शेष: मेदिन्यां (१५४।१२८) यथा लागंली तोयपिबल्या क्लीवन्तु कुसुमान्तरे। गोदारणे तृणराज गृहदारु विशेषयो: इति।

ईशा शब्दस्य व्युत्पत्तिर्यथा ईष्टे। ईश ऐश्वर्ये धातो: इगुपत्वात् क प्रत्यय:। अत्रामर: तत्रैव लागंल शब्दे एव ईशा लागंलदण्ड: स्यादिति।

प्रभुशंकरयोरीश: स्त्रियां लांगलदण्डके इति तालव्यान्तेरुद्रभसौ। ईश: स्वामिनी रुद्रे च स्यादीशा हलदण्डके। इति शान्ते हैम: (२।५५६)।

**लौहित्यायनी**—लोहितस्यापत्यं स्त्री। लोहित शब्दात् गर्गादि यञन्तात् ष्फ (पा०सू०४।१।१७)। प्रत्यय:। लोहित शब्द विषये कल्पद्रुमकारस्य (च०पृ०२३७) मतं यथा रुह धातो इतन् प्रत्यय: रस्य लश्च नदी विशेष: सागर विशेषस्य भौम:। रक्त वर्ण:। रोहितमत्स्य: मृग विशेष: इति शब्दरत्नावली। सर्प: सुरान्तर: इति धरिणि: इति

शब्दचन्द्रिका रक्तालु: रक्तशालि इति राजनिर्घण्ट: बलभेद: इति हेमचन्द्र:। इत्यपि मात्स्ये। एतत्सर्व कल्पद्रुमे एव।

**वगाह:**—अव पूर्वक गह धातो: भावे (पा०सू०३।३।१८) घञ् प्रत्यय:। अलोप: अवगाह इत्यर्थ। एवमेव कल्पद्रुमादिषु (च०पृ०२४५)।

**वत्सतरार्णम्**—वत्सरतरमधिकृत्य तद् ग्रहणार्थं वा यदृणं गृह्यते तद्। वत्सतर + ऋणम् इत्यवस्थायां प्रवत्सतरकम्वल (श०च०पृ०२४५) वसन दशाणानामृणे इति बृद्धि: वत्सतर शब्दस्य व्युत्पत्तिर्यथा। तर्नुवत्स: प्रथमवयो वत्स: वत्सो क्षाश्वर्ष भ्यचेतिष्टश्च् प्रत्यय: (पा०सू० ५।३।९१) अत्रामर: (२।९।६२) दभ्यवत्सतरौ समौ इति। ऋण शब्दस्य व्याख्या तत्रैवावलोक्या।

**वत्सा**—वत्स शब्दात् अजाद्यतष्टाप् (पा०सू०४।१।४) इति टाप्। वद व्यक्तयांवाचि वद्स्थैर्ये वा धातो: वृत्तवदिहनि (उ० ३।६२) इति स:। अमरेणात्र (२।६।७८) उरे वत्सं च वक्षश्चेति। अन्यच्च (अम०२।९।६२) शकृत् करिस्तु वत्स: स्यादिति। अन्यम् (अम०३।३।२२६) वत्सौ तर्णक वर्षौ द्वौ इति। पुत्रादौ तर्णके वर्षे वत्सौ वत्सं तु वक्षसि इति रुद्र:। वत्स: पुत्राहिवर्षयो:। तर्णके नीरसि क्लीवम् इति मेदिनी (१७०।११-१२) कल्पद्रुमे (च०पृ०२५६) यथा दोगधा दोषक: दोष: इति शब्दरत्नावली। रौहिणेय: बाहुल्य: तन्तुभ:। सद्योजातस्य तस्य पर्याय: तर्णक: तन्तुभ: तर्णभ: कच: इति जटाधर:। यथा भागवते (४।८।११)–

**न वत्स ! नृपतेर्धिष्णम् भवानारोढुर्महति।**
**न गृहीतो मया यत् त्वं कुक्षावपिनृपात्मज।।**

**वधू:**—वहति। उह्यते वा। वहोधश्च (उ०१।८३) इत्यू:। अमरेणात्र यथा-मरूनमाला तु पिशुना स्पृक्का देवी लता लघु:। समुद्रान्ता वधू: कोटिवर्षा लंकोऽपि केत्यपि इति। अन्यचामरे (२।४।१३३) स्त्रीयोषिदबला योषा नारी सीमन्तिनी वधू:। प्रतीपदर्शिनी वामा वनितामहिला तथेति। अन्यच्च समा: (अम०३।६।९) स्नुषाजनीवध्व: इति। हैमेन (२।२५१) यथा वधु: पत्न्या स्नुषानार्यो: स्पृवका सारिवयोरपि नवपरिणीताञ्चेति। अन्यमपि अमरे (३।३।१०२) वधूर्नार्या स्नुषास्त्री च। एवमेव विश्वेऽपि (८३।२०।८) यथावधू: स्नुषा नवोढा स्त्री भार्यापृक्कागंनासु च। शट्या च शारिवायाञ्चे ति। एवमेव मेदिन्यामपि (७९।१४-१५)। केचित् वधू: शब्दम न्यथा व्युत्पादयन्ति यथा वघ्नात्यविद्यया। चमितनिबन्धि य: इत्यू:। तन्न समीचनीतांमर्हति। कृषि चमितनिधनिसजिखार्जभ्य: (उ०१।८०) उन: इति सूत्रे बन्धेरग्रहणात् नलोपविधेरदर्शनाच्च। राधायै अस्य शब्दस्य प्रयोग: तद्यथा श्रीमद्भागवते -(१०।३१।३९)

**एवमुक्तः प्रियामाह स्कन्धभारुह्यतामिति।**
**ततश्चान्तर्दधेकृष्णः सा वधूरन्वतप्यत।।**

**वधूटी**—अल्पवधूः। अल्पवयस्कायां नार्याम्। यथा कारिकावल्यां मंगलाचरणे-

**नूतनजलधररुचये गोपवधूटी दुकूल चौराय।**
**तस्मै कृष्णाय नमः संसार महीरुहस्य बीजाय।।**

**वन**—वन्यते सम्भज्यते सेव्यते वा। वन सम्भक्तौवनु याचने वा धातोः कर्मणि (पा०सू० ३।३।११) घञ् प्रत्ययः सञ्ज्ञापूर्वकत्वात् वृद्ध्यभावः। केचित्तु वनशब्दमन्यथा व्युत्पादयन्ति तद्यथा बाहुलकात् क्युनि अनुदात्तोपदेश (पा०सू० ६।४।३७) इत्यनुनासिकलोप। तन्न समीचीनम्। अनुनासिकलोपस्य किति झलि विधानात् क्युनि तदप्रसंगात्। अत्र हैमः (२।२८६) वन प्रस्तवने गेहे प्रवासेऽम्भसि कानने इति। जलस्य पर्यायः पयः प्रयोगे द्रष्टव्यः। अमरे (२।४।३) यथा पुमानक्रीड उद्यानं राज्ञः साधारण वनम्। अन्यच्च वने सलिल कानने। एवमेव मेदिन्याम् (८४।१९) कल्पद्रुमे (च०पृ० २६१) यथा अटवी अरण्यम् विपिनम् गहनम् काननम् इत्यमरभारतौ। दावः दवः अहतिभीरकम् झातम् गुहिनमिति शब्दरत्नावली। शत्रम् समजम् प्रान्तरम् वित्तमिति जटाधरः। कान्तारमिति राज निर्घण्टः। शंकराचार्य शिष्यस्य हस्तामलकस्य शिष्याणामुपधि विशेषे पुलिंगः। यदुक्तं प्राणतोषिण्यामवधूत प्रकरणे–

**सुरम्ये निर्झरिदेशे वने वासं करोतिः यः।**
**आशा पाश विनिर्मुक्तो वननामा स उच्यते।**

रश्मिः इति निर्घण्टु (नि० १।५।८) अत्र वन शब्दस्य विपिनयर्थः अस्य प्रयोगः यथा भागवते (०७।५।५) प्रह्लाद सम्वादे-वनं गतो यद्धरिमाश्रयेत।

**वर्षाभूः**—वर्षासु भवतीति। भुवः संज्ञान्तरयोः (पा०सू० ३।२।१७९) इति क्विप् प्रत्ययः। अत्रामरः (१।१०।२४) भेके मण्डूक वर्षाभूशालूरप्लव दर्दुराः। इति। मेदिन्यां (१०७।१८) यथा-मण्डूकप्लवकोभुको वर्षाभूर्दर्दुरो हरिः। इति भावप्रकाशस्य पूर्व खण्डे द्वितीयभागे। इन्द्रगोपः इति राजनिर्घण्टः। प्रायः एवमेवान्य कोशेषु।

**वषट्**—अव्य०। उह्यतेऽनेन वह प्रापणे धातोः डषट् प्रत्ययः। देव प्रभृतिहर्विर्दाने यथामरे (३।४।८) स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधेति यथा।

**वस्त्रकीती**—वस्त्रेन क्रीतेति विग्रहे सुबुत्पत्तेः प्रागेव क्रीत शब्देन समासे सुब्लकि कृते क्रीतात्करण (पा०सू० ४।१।५०) पूर्वेदि ति ङीष् प्रत्ययः। वस्त्रशब्दस्य व्युत्पत्तिः यथा- वस्यते आच्छाद्यतेऽनेनेति। वस् अच्छादने धातो सर्वधातुभ्यः (उ०४।१५८) ष्ट्रन्

प्रत्ययः। परिधाना-द्युक्तकार्पासादि निर्म्मित वस्तु। तत्पर्यायः यथामरे (२।६।११५) वस्त्रमाच्छादनं वासश्च वसनशुंकम्। कल्पद्रुमे (च०पृ०२१२) यथा सिचयः प्रोतः लक्तकः कर्पटः शाटकः कशिपुः इति जटाधरः। वासनम्–प्रोतम् छादम् वासमितिशब्दरत्नावली। अस्य परिधानविधिर्यथा विकक्षो नोतिरीयश्च न्गनश्चावस्त्र एव च। श्रौतं स्मार्त तथाकर्म नग्नश्चिन्तयेदपि।

**वाः**–वारयति। वृञ् धातोः व्यन्तात् क्विप् प्रत्ययः। अथवा वार्यते तृषाननेति। यद्वा वृञ् वरणेधातोः स्वार्थिकोऽण्। छान्दस्यः। तदन्तात् क्विप् । अणि लोपः हलङ्यादि लोपः। रेफस्य विसर्गः। जलमित्यमरे अस्य पर्यायः पयः प्रयोगे द्रष्टव्यः।

**वाक्**–उच्यतेऽसौ अनया वेति। वच् परिभाषणे धातोः क्विव्बचि (उ०२।५७) त्युणादिना क्विप् दीर्घःसम्प्रसारणञ्च। अत्रामरः (२।६।१) ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वतीति। मेदिन्यान्तु (२८।९) वा वाचे भारत्या वचने स्त्रियौ।

**वाग्मी**–प्रशस्ता वागस्य। वाचो (पा०सू०५।२।१२४) ग्मिनिः प्रत्ययः। अत्रामरः (३।१।३५) वाचोयुक्ति पटुर्वाग्मी वावदूकोऽतिवक्तरि मेदिन्या (९२।२८) यथा वाग्मीपटौ सुराचार्यै इति। यथा कामन्दकीनीतिसारे (०४।१५) वाग्मी प्रगल्भः स्मृतिमानुदग्रो बलवान् वशी। कल्पद्रुमे (च०पृ०३२०) पद्या शक्तः स्त्रंहननो वाग्मी सौवीरी तनयास्त्रयः मनस्योरभवत् पुत्रा शूरा सर्वे महारथाः।

**वाचा**–स्त्री० वाच् शब्दात् भागुरिमते टाप्। अत्र कल्पद्रुमे (४।४८) वाक् इति त्रिकाण्डशेषः। यथा वष्टिभागुरिरल्लोपवाप्योरुप सर्गयोः। आपं चैव हलन्तानां यथा वाचा निशादिशा। यथा च पंचतन्त्रे (उ०४।१) तत् श्रुत्वा ब्राह्मणेन शुचीभूय तिसृभिर्वाचाभिः स्वजीविताद्धं ददौ इति।

**वातप्रमी**–वातं प्रमिमीते वातमभिगच्छति। वात + प्र + मा माने धातो उणादिना (उ०४।१) ई प्रत्ययेन साधुः। वातप्रमी र्वातमृगः इत्यमरे (४।५।७)। कल्पद्रुमे (च०पृ०३२७)। यथा-नकुलः। अश्वः। इति संक्षिप्त प्रसारोणादिवृत्तिः। वायुवद् वेगगामिनि त्रिलिंगः इति। यथा ऋग्वेदे (४।५८) सिन्ध्वो रिव प्राध्वने सूघनासा वातप्रमायः पतयन्ति यह्वाः।

**वायुः**–वातीति। वा गति गधनयोः धातोः कृवापाजिमि स्वीढ साध्यशुभ्य उण् इत्युणादिना उण् प्रत्ययः। (उ०१।१) आतो युक् (पा०सू० ७।३।३३) चिण् कृतोः इति युक्। अत्रामरः (१।१।६१-६३) श्वसनः स्पर्शनो वायुर्मातिरिश्वा सदा गतिः। वृषदश्वो गन्धवहो गन्धवाहानिलाशुगः। समीरमारुत महज् जगत्प्राण समीरणाः। नभस्वद्वात

पवन पवमान प्रभन्जना:। प्रकम्पन्नो महावातो झञ्झावात: सवृष्टिक:। प्राणोऽपान: समानश्चोदान व्यानौ च वायव:। शरीरस्था इमे।

**हृदिप्राणो गुदेऽपान: समानो नाभिसंस्थित:।**
**उदान: कण्ठदेशेस्याद् व्यान: सर्व शरीरग:।।**

**वारि**—वारयति तृषामिति। ण्यन्तात् वृ धातो: वासि (उ०४।१२४) वपि यजिराजिब्रजि इत्युणादिना इञ् प्रत्यय:। जलमित्यर्थ:। अस्य पर्याय: पय: प्रयोगे द्रष्टव्य:। मेदिन्यां (१२७।६७) यथा वारिववार्गजबन्धयो: स्त्री क्लीवेऽम्बुनिवालके इति। कल्पद्रुमे (च०पृ०३४८) यथा-ह्रीवेरम् इति हेमचन्द्र:।

**विट्**—विश् प्रवेशने धातो: क्विप् प्रत्यय:। अत्रामर: (२।९।१) ऊरुख्या ऊरुजा अर्था वैश्याभूमिस्पृशो विश: इति। मेदन्यिां (१६३।१४) यथा विट् पुंसि मनुजे वैश्ये इति। यथाइ मनु: (२।३६) गर्भाष्टमे वै कुर्वीतब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञ: गर्भाच्च द्वादशे विश: इति।

**विद्वान्**—वेत्ति विद् ज्ञाने धातो: लट: (पा०सू०३।२।१२४) शत्रादेशे विदे:शतर्वसु (पा०सू०७।१।३६) इति शित्वात् सार्वधातुकवात् शप् लुकिकृदन्तत्वात् प्रातिपादिकत्वं विद्वस् शब्द:। तस्मात् सु: उगित्वान्नुम् दीर्घ: सुलोप:। अत्रामर: (२।७।५-६) विद्वान् विपश्चिद्दोषज्ञ: सन्सुधी: कोविबदो बुध:। धीरोमनीषी प्राज्ञ: संख्यावान्पण्डित: कवि:।। धीमान् सूरि: कृती कृषलब्धवणे विचक्षण: दूरदर्शी दीर्घदर्शी इति। अन्यदपि अमरे (३।३।२३४)। विद्वान् विदंश्चेति। विद्वानात्मविद् प्राज्ञे पण्डिते चाभिधेयवत् इति (विश्व २६७।२५)। प्रयोगस्तद्यथाविद्वान् कीदृग् बचो ब्रूते। क: रोगी कश्च नास्तिक:। केचित् चन्द्रन पश्यन्ति सूत्रं तत् पाणिनेर्वद।

**विप्रूष:**—ष्णान्ता (पा०सू० १।१।२४)। षडि ति सूत्रे संख्या ग्रहणनुवृत्ते: सान्तत्वे पि संख्यावाचकत्वाभोवन षट् संज्ञाविरहात् तत: परस्य जसो न लुगिति। विपुष् शब्दस्य व्युत्पत्ति: यथा विशेषेण प्रोषति दहति पापानिया यद्वा विगता रुद्धा वा पुष् दाहेऽस्मात् सम्पदादित्वात् (वा० ३।३।१०८) क्विप् प्रत्यय:। विन्दुरित्यर्थ:। तथाचामर: (१।१०।६) पृषन्ति विन्दु पृषता: पुमांसो विप्रुष: स्त्रिय:। यथा भागवते (१०।४७।१८)–

**यदनु चरित लीला वर्ण पीयूष विप्रुट् सकृददनवधूत: द्वंद्व धर्माविमुक्त:।**
**सपदिगृहकुटुम्बं दीनमृत्सृज्य दीना: वयव इव विहंगा भिक्षुचर्या चरन्ति।।**

**विभ्राड्**—विशिष्य भ्राजते इति। भ्राजभाषेति (पा०सू०३।२।१) क्विप् प्रत्यय:। अत्रामर: (२।६।१०१) भ्राजिष्णुराचिषु इति। प्राय: एवमेवान्य कोशेषु।

**विश्वः**—विशन्ति स्वकर्मष्विति विश् प्रवेशेन धातोः अशूपुष्षि लटिकनि खटि विशिभ्यः क्वन् प्रत्ययः (उ०१।१४९) सर्वनाम सञ्ज्ञोऽयम्।

**विश्नः**—विच्छदीप्तौ धातोः यजयाचयतविच्छेति (पा०सू०३।३।९०) नङ्० प्रत्ययः। इत्यत्र श्चुत्वे (पा०सू० ८।४।४०) प्राप्ते शादि ति निषेधो अत्र कल्पद्रुमे (४।४३६) दीप्तिः सिद्धान्तकौमुदी। गति इति मुग्धबबोधटीकायां दुर्गादासः।

**विष्णुः**—वेवेष्टि। विषृ व्याप्तौ धातोः विधेःकिच्च (उ०३।३९) इति नु प्रत्ययः। अस्य पर्यायः कृष्णः शब्दे द्रष्टव्यः। कल्पद्रुमे (च०पृ०४५२) यथा अग्निः इति शब्द माला। युद्धः वसुदेवता इति धरणिः। द्वादशादित्य अन्यतमः यथा महाभारते (१।६५।१६) एकादशस्तथात्वष्टा द्वादशो विष्णुरुच्यते। जघन्यस्तु सर्वेषामादित्याना गुणाधिकः धर्मशास्त्रकर्त्तामुनि विशेषः। यथा मन्वत्रि विष्णु हारीत याज्ञवल्क्योशनोऽगिराः यमापस्तम्ब संबर्त्ता कात्यायन वृहस्पती पराशर व्यास शंखलिखिता दक्षगौतमौ। सातातपो वशिष्ठश्च धर्मशास्त्र प्रयोजकाः। इति याज्ञवल्क्यसंहिता। ब्रह्मणोरूप विशेषः। तस्य व्युत्पत्तिर्यथा वेवेष्टि व्याप्नोति विश्वं यः। वेषति सिन्चति आप्यायते विश्वमिति वा। विष्णाति वियुनक्ति भक्तान् मायापसारणेन संसारादिति वा। विशति सर्वभूतानि विशन्ति सर्वभूतानि अत्रेति वा। यस्माद् विश्वमिदं सर्व तस्य शक्त्यामहात्मनः। तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनात्।

**विषु**—अव्य०। विष् + कु। अत्र वाचस्पत्ये (पृ०४९३४) यथा साम्ये इति भरतः।

**विहायसा**—अव्य। आकाशः। एवमेवार्थः कल्पद्रुमादिषु। (च०पृ०४६५)।

**वीरपत्नी**—वीरः पतिर्यस्या इति विग्रहे नित्यं सपत्न्यादिषु (पा०सू०४।१।३५) इति। पत्युर्नकारादेशः। ऋन्नेभ्यो (पा०सू० ४।१।५) डीष् वीरभार्या इत्यमरः (२।६।१६)। यथा मार्कण्डेयपुराणे (१२५।७) तेषा मेतदवचः श्रुत्वा वीरा वीर प्रजावती वीरगोत्र समुद्भूता वीरपत्नी प्रहर्षिता। कल्पद्रुमे (च०पृ०४७३) नदी विशेषः यथा ऋग्वेदे अन्जशी क्ललिशी वीरपत्नी। पयोहिन्वाना उदभिर्नरन्ते। वीरपत्नी वीरस्य पालयित्री एतत् संज्ञितातिस्रः नद्यः इति तद्भाष्ये सायनः।

**वृत्तबाहुः**—वृत्तौ बाहू यस्या। सञ्ज्ञात्वाभावात् बाह्वान्तात् (पा०सू०४।१।६७) सञ्ज्ञामिति नोङ० वृत्तशब्दस्य व्युत्पत्तिः यथा वर्ततेस्म। क्तप्रत्ययः। वर्तुलमर्थः यथामरे (३।१।६९) वर्तुल निस्तलं वृतम्। हैमेन (२।२०१) यथा वृतं वृत्तौ दृढ़े मृते चरित्रे वर्तुले छन्दः स्वती ताधीयोर्वते इति। अमरे (३।१।९२) अन्यदपि वृते तु वृत्तवावृत्तौ। अन्यच्च वृत्तं पद्मेचरित्रे त्रिष्वतीते दृढ़निस्तले। प्रायः अन्येष्वपि कोशेष्वेवमेव।

**वृत्रहन्**—वृत्रं हतवानिति क्विप् प्रत्ययः (पा०सू० ३।२।८७)। इन्द्रः। अस्यपर्यायः ई इन्दप्रयोगे द्रष्टव्यः। यथा भागवते (९।७।१९) अभ्येत्याभ्येत्यस्थविरः विप्रोभूत्वाह वृत्रहा। यथा च ऋग्वेदे (१।१०।६।६) इन्द्रः कुत्यः वृत्रहनं शचीपतिम् वृत्रहनं वृत्राणां शत्रूना हन्तारमिति तद् भाष्ये सायनः।

**वृथा**—वृणोति वृणीतेवा। वृञ् वरणे वृञ् सम्भक्तौ वा धातोः बाहुलकात् थाक् प्रत्ययः। अत्र विश्वकोशकारः (१८८।२९) वृथा निष्कारणे वन्ध्ये वृथा स्याद्विधिवर्जिते इति। एवमेवामरे (३।३।२४७) यथा वृथा निरर्थकाविध्योः अन्यदपि (३।४।४) अमरे व्यर्थकेतु वृथा मुधा। प्राय अन्येष्वपि कोशेष्वेवमेव। यथा गरुड़पुराणे ११५ अध्याये–

**वृथा वृष्टिः समुद्रस्य तृप्तस्य भोजनं वृथा।**
**वृथा दानं समृद्धस्य नीचस्य सुकृतं वृथा।**

**वृषली**—वृष्यते वर्षति वा। वृषु सेचने धातोः। वृषादिभ्यश्चेति (उ०१।१०६) कल च् प्रत्ययः। वृषं धर्म लुनातिवा लञ् छेदने धातोः अन्येभ्योऽपि इति डप्रत्ययः। वृषं लाति वा। क प्रत्ययः। वृषल शब्दात् जोतेरस्त्रीति ङीष् प्रत्ययः। वृषल शब्दस्य पर्यायः यथामरे (१।१०।१) शूद्राश्चावरवर्णश्चवृषलाश्च जघन्यजाः। मेदिन्या (१५४।१३४) यथा वृषलोगृञ्जने शूद्रे चन्द्रगुप्तेऽपि राजनि।

**वृषाकषायी**—वृषाकपेः स्त्रीः। वृषाकप्याग्नि (पा०सू०४।१।३७) इति ङीष् ऐका रादेशश्च अत्रामरः (३।३।१५६) वृषाकपायी श्रीगौर्याः कल्पद्रुमेः (च०पृ०४८९) यथा-वृषाकपेः विष्णोः शिवस्य अग्नेरिन्द्रस्य वा भार्या। स्वाहा इति भरतः। शची इति स्वामी। यथा ऋग्वेदे (१०।८६।१३) वृषाकपायी रेवति सुपुत्र आदु सुस्नुषे हे वृषाकपायी कामना वर्षकत्वादभीष्टदेशगमनाच्चेद्रो वृषाकपिस्तस्य पत्नि इति तद्भाष्ये सायनः। जीवन्ती शतावरी इति मेदिनी (१२२।१३३) प्रायः अन्येष्वपि कोशेष्वेवमेव।

**वेधा**—विदधाति। वि उपसर्गपूर्वकं धा धातोः विधानो वेध च इत्यसिः वधादेशश्च। (उ०४।२२४) अत्र कल्पद्रुमेः (च०पृ० ५०४) ब्रह्मा। यथा रघुः (१।२९) तं वेधा विदधे नूनं महाभूतसमाधिना। तथाहि सर्वे तस्यासन् परार्थैक कला गुणाः। सूर्य इति शब्दरत्नावली। पाण्डवः इवि विश्वः। श्वेतार्कवृक्षः इति शब्दचन्द्रिका। अनन्तपुत्रः। मेधावी इति निघण्टुः (३।१५) ब्रह्मेत्यमरः। अस्य पर्यायः ब्रह्मा प्रयोगे द्रष्टव्यः।

**वौषट्**—अव्य। उह्यतेऽनेन हविरिति वाहुलकात् डौ प्रत्ययः देव प्रभृति हविर्दाने। अस्य पर्यायः। वषट् प्रयोगे द्रष्टव्यः। देवहविर्दानमन्त्रः इति कल्पद्रुमे (च०पृ०५२।९) तत्र स्वाहादि पन्चशब्दा देव हविर्दाने बह्निमुखाहुतौ वर्तन्ते। देवाय हविषोदानं देवहर्विर्दानम्। तत्र देवाः इन्द्रादयः। यत्र पितरः देवता इति स्मृतेस्तेऽपि देवाहर्विदान इत्यनेन एते मन्त्रा

इति सूचितम्। प्राय: एवमेवन्यकोशेषु।

**शकन्धुः**—शकानां देशविशेषाणमन्धुः कूपः। शक अन्धुः इति स्थिते सवर्णदीर्घे प्राप्ते तम्प्रबाध्य शकन्ध्वादित्वात्पररूपमिति। अन्धु शब्दस्यव्युत्पत्तिः यथा अभ्यते। अम गत्यादौ धातोः अर्जिदृशिकम्यमीति (उ० १।२७)। कुः धुक् च। यद्वा अन्ध दृष्युपघाते धातो (उ १।३७) मृगयादित्वात् कु प्रत्ययः। अत्रामरः पुंस्येवान्धुः प्रहिः कूपः उद पानं तु पुंसि वेति।

**शकृत्**—शक्नोतिनिःसर्तुमिति। निःसारयितुं वा। शक् धातोः ऋतिन् (उ०४।५८) प्रत्ययः। विष्ठेत्यर्थः। तथाचामरः (२।६।६७-६८) उच्चरावस्क रौ शमलं शकृत्। गूथं पुरीष वर्चस्कमस्त्री विष्ठा विषौ स्त्रियौ इतियथा श्रीमद्भागवते (३।३०।१९)-

**यमदूतौ तथा प्राप्तौ भीमौ सरभसेक्षणी।**
**स दृष्ट्वा त्रस्तहृदयः शकृन्मूत्रं विमुन्चति।**

**शङ्०खध्माः**—शंखं धमतीति। ध्माशब्दाग्नि संयोगयोः धातोः क्विप् प्रत्ययः विच् वा। शंखवादक इत्यर्थः। एवमेवकल्पद्रुमादिषु। (च०पृ०१२)।

**शङ्खपुष्पी**—शंखवत् पुष्पं यस्याः। ङीष् (पा०सू०४।१।६४) प्रत्ययः। वृक्षविशेषः। तत्पर्यायः यथा कल्पद्रुमे (प०पृ०१२)। सपुष्पी शंखावहा कम्बु मालिनी पीतपुष्पी कम्बुपुष्पी मेध्या, मलविनाशिनि किरीटी शङ्खकुसुमा भूलना शंखमालिनी। अस्याः गुणाः हिमत्वं तिक्तत्वं मेधास्वरकारित्वं ग्रह भूतादि दोषनाशित्वम्। वशीकरण.सिद्धिदातृत्वञ्च। इति राजनिर्घण्टुः। अपि च शंखपुष्पी तु तीक्ष्णोष्णामेध्या क्रिमिविषापहा। इतिं राजवल्लभः।

**शनैः**—अव्य०। शणाति। शण दाने। शानयतिवा। शान् तेजने धातोः ऐस् प्रत्ययः पृषोदरादित्वात् णस्यनः। ह्रस्वो वा। अत्रामरः (३।४।१७) अद्रुते शनैः मेदिन्यां (१८६।८३) यथा शनैः स्वेरे शनैश्चरे। प्रायः एवमेवान्यकोषेषु। यथा गारुड़े (१०९ अध्याय) शनैर्विद्या शनैः कन्था शनैः पर्वतामारुहेत्। शनैः कामश्च धर्मश्च पञ्चैतानि शनैः शनैः।

**शम्भुः**—शं सुखं भवति। अन्तर्भावितण्यर्थात् मितद्रवादित्वात् (वा०३।२।१८०)। डु प्रत्ययः। केचित् अन्यथा व्युत्पादयन्ति यथा शंभवत्यस्मात् तन्न समीचीनतामर्हति। कर्तरि कृतो विधानादपो दाने डु प्रत्ययाभावात्। शिवः। पर्यायाः ईश इति शब्दे द्रष्टव्याः।

**शर्वरी**—शृणाति चेष्टामिति। शृ हिंसायां धातोः कृशृमृवञ्चतिभ्यः इत्युणादिन ष्वरच् प्रत्ययः। षित्वात् ङीष् । सिद्धान्तकौमुदी बालमनोरमायान्तु अन्यैव साधनिका यथा शृधातोः वनिप् प्रत्ययः आर्धधातुत्वात् गुणः वनोरेति (पा०सू०४।१।७) ङीष् रश्चान्तादेशश्च। रात्रिः। तत्पर्यायः यथामरे (१।४।३-४) शर्वरी। निशा निशीथिनी रात्रिस्त्रियामा क्षणदाक्षपा।

विभावरी तर्मास्वन्यौ रजनी यामिनी तमी इति। मेदिन्या (१३८।२२०) यथा- शर्वरी यामिनी स्त्रियोः इति। प्रज्ञाद्यणि शार्वर्यपि शर्वरी शार्वरी शर्येति शब्दार्णवः। हरिद्रा इति विश्वः। सन्ध्येति संक्षिप्तसारोणादि वृत्तिः। प्राय एवमेवान्य कोशेषु। यथा ऋग्वेदे (५।५२।३) अतिस्कन्दन्तिशर्वरीः।

**शश्वत्**—अव्य। शशति शशप्लुतगतौ धातोः बाहुलकाद्वत्। अत्रामरः (३।३।२४२) पुनः सहार्थयोः शश्वदिति। अन्यदपि (अम० ३।४।२) मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः इति। अन्यदपि (३।४।११) अभीक्ष्णं शश्वदनारते। मेदिन्या (१८१।३२) यथा पक्षान्तरे च शश्वत्स्यादनुप्रश्नेच मंगले। पुराकल्पे सदार्थे च पुनरर्थे च दृश्यते। प्राय एवमेवान्य कोशेषु यथा गीतायां (६।३१) क्षिप्रं भवति धर्मात्माशश्वच्छान्तिं निगच्छन्ति।

**शान्तः**--शम्यते स्म। शमु उपशमे। ण्यन्तात् क्त प्रत्ययः। (पा०सू० ४।४।५९) शान्तः शमिते (अम०३।१।९७) (मे०५०।६) यथा शान्तो युक्त रसयोः पुंसि त्रिषु समन्विते। अव्ययं वारणे शान्तमति कल्पद्रुमे (५।४६) यथा उपशमं प्रापितः। प्राप्तोपशमः। इति भरतः। श्रान्तः जितेन्द्रियः इति हेमचन्द्रः। प्राय एवमेवान्यकोश काराणां मतम्।

**न यत्र दुःखं न सुखं न चिन्ता।**
**न द्वेषरागौ न च काचिदिच्छा।**
**रसः स शान्तः कथितो मुनीन्द्रैः।**
**सर्वेषु भावेषु सम प्रमाणः।**

**शार्ङि० गञ्जयः**—शार्ङिगन् जयऽति स्थिते स्तोश्चुनेति (पा०सू० ८।४।४०) नकारस्य श्तुत्वं ञकारः। शर्गिन् शब्दस्य व्युत्पत्तिः यथा—शृगस्य विकारः शार्गः धनुः। तदस्यास्ति। अत इनिठनौ (पा०सू० ८।४।४०) इति इनि प्रत्ययः। विष्णुरित्यर्थः। अस्य पर्यायः कृष्ण शब्दे द्रष्टव्यः।

**शालपर्णी**—शालस्य पर्णवत् पर्णमस्याः। पाककर्णेति (पा०सू० ५।२।११५) ङीष् प्रत्ययः। वृक्ष विशेषः। तत्पर्यायः यथाकल्पद्रुमे (पृ०६५) सुदला सुपत्री स्थिरा सौम्या कुमुदा गुहा ध्रुवा विदारि गन्धा अंशुमती सुपर्णिका दीर्घमूला दीर्घपत्रिका वातघ्नी पीतिनी तन्वी मुधा सर्वानुकारिणी शोफघ्नी सुभगा देवी निश्चला ब्रीहिपर्पिका सुमूला सुरूपा शुभपत्रिका सुपर्णी शालिपत्री शालिद्रला इति राजनिर्घण्टः। विदारी सालपर्णी इत्यमरटीकायां भरतः। अस्या गुणाः ग्राहित्वम्। कफपित्तनाशित्वन्च। इति राजवल्लभः। तिक्तत्वम् गुरुत्वम् ऊष्णत्वम्। वातदोष विषमज्वरमेहार्शः शोक सन्ताप नाशित्वन्च इति राजनिर्घण्टः।

**शिखा**—स्वागाच्चो पसर्जनादिति सूत्रे केवल शिखा शब्दात् ङीष् निवृत्यर्थमुपसर्जन ग्रहणम्। शिखा शब्दस्य व्युत्पत्तिः यथा शेते मूर्द्धनि। शीङ्धातो शीङः ह्रस्वश्चेत्युणादिना खः ह्रस्वोगुणाभावश्च। अत्रामरः (२।६।९७) शिखा चूड़ा केशपाशी। मेदिन्यां (२०।६-७) यथा-शिखाशाखाबर्हिचूड़ालागंलिक्यग्रमात्रके। चूडामात्रे शिखायाज्य ज्वालायां प्रपदेऽपि च।

**शिरस्पदम्**—शिरसः पदमिति विग्रहः। शिरः पदमित्यत्र अधःशिरसी पदे (पा०सू०८।३।४७) इति विगसर्गस्य सकारादेशः शिरप् शब्दस्य व्युत्पत्तिः यथा श्रीयते उष्णीषादिना। श्रयतेः स्वांगे शिरः किच्च इत्यसुन् प्रत्ययः। अत्रामरः (२।६।९५) उत्तमागं शिरः शीर्ष मूर्धा ना मस्तकोऽस्त्रियामिति। मेदिन्यां (१७३।४१) यथा शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च। शिरः शब्द विषयेऽन्येऽपि कोशकाराः एष्वर्थेषु सम्मताः सन्ति पदशब्दस्यच व्युत्पत्तिः यथा-पदति। पदस्थैर्ये पद्यते पद गतौ धातोः वा पचाद्य च् भावकर्मकरणेषु वाघञ् प्रत्ययः। संपूर्वकत्वात वृध्य भाव। अत्रामरः (३।३।९३) पदं व्यवसिति त्राणस्थान लक्ष्मा ध्रि वस्तुषु। विश्वे पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। पादतच्चिह्नयोः स्थान त्रानयोरंगवस्तुनोः। एवमेव मेदिन्यां (विश्व० ७७।३) यथा पदं शब्दे चे वाक्ये च व्यवसाय प्रदेशयोः। पादच्चिह्नयोः स्थानत्राणयोरेकवस्तुनी।

**शिवच्छाया**—शिवस्य शम्भोः छाया कृपा। शिवछायेत्यत्र छेचे (पा०सू० ६।१।७३) ति तुगागमः श्चुत्वम्। शिव शब्दस्य व्युत्पत्ति यथा-शेतेऽनेनेति शिवम्। कल्याणमर्थः।

**शिशुः**—प्रथमवयो वाचित्वेऽपि अदन्ताभावाद् न ङीप्। श्यति शायते वा शो तनूकरणे धातोः शः कित् सन्व (उ०१।२०) इत्युः सन्वद्भावाद्द्वित्वोत्वे। केचित्तु अन्यथा व्युत्पादयन्ति यथा-शशति प्लुतेन गच्छतीति शश प्लुतगतौ धातोः शशिरयोरतः इः इति कुः तच्चिन्त्यः। उज्ज्वलदत्तदिषु शशिरपोरतः इति सूत्र दर्शनात्। अस्यः पर्यायः अमरे (३।३।१५०) यथा पोतः वाकोऽर्भकः डिम्भः पृथकः शावकः शिशुः। अन्य पर्यायः कल्पद्रुमे (पृ०१०७) यथा शावः उर्भः शिशुकः पोतकः मिष्टकः इति शब्दरत्नावली। गर्भः इति जटाधरः। तस्य लक्षणादि यथा। वृद्धशातातपः शिशोरभ्युक्षण प्रोक्तं वालस्य चमनं स्मृतम्। रजस्वलादि संस्पृश्य स्नातव्यन्तु कुमारकैः प्राक् चूडाकरणाबालः। प्रागन्नप्राशनात् शिशुः कुमारस्तु स विज्ञेयः यावन्मौन्जी न बन्धनम्।

**शुकम्**—अव्य०। शीघ्रार्थे। शुकशब्दस्यान्येऽपि अर्थाः सन्ति। तत्र यथा व्युत्पत्तिः। शोचति। शुच् शोके शृ गतौ धातो वा शुकवल्कोल्का (उ० ३।४२) इति निपानात् साधुः। कल्पद्रुमेत्वन्यैव (पृ०११३) व्युत्पत्तिः यथा शोभते इति। शुभदीप्तौ धातोः पूर्ववत् निपतनात् साधुः। ग्रन्थिपर्णमर्थः। तस्य पर्यायः यथामरे (२।४।१३२) ग्रन्थिपर्ण

शुकं बर्हिपुष्पं स्थौणेय कुक्कुरे इति। अन्यदपि अमरे (२।५।२१) कीर शुकौ इति। मेदिन्या (४।३७) यथा शुकोव्यासमुते कीरे रावणस्य तु मन्त्रिणि। शिरीष पादपे पुंसि ग्रन्थिपर्णे नपुंसकमिति।

**शुचिः**—वोतो गुणवचनादि तिसूत्रे उतः इति कथनेन नात्रङीष्। अस्य व्युत्पत्तिर्यथा-शुच्यत्यनेन। शुच् धातोः इगुपधात् किदि त्युणादिना इन् स च कित्। (उ० ४।१२९) शुक्लगुणविशिष्ट यथामरेः (१।५।१२)।

**शुक्ल शुभ्र शुचि श्वेत विशदश्वेत पाण्डुराः।**
**अवदातः सितो गौरः वलक्षोधवलोऽर्जुनः।।**

**शुद्धक्षियौ**—शुद्धा धीर्यस्येति। अत्र गतिकारकेतर (वा० १।४।६०) पूर्व पदस्य यण् नेष्यते। इति यणभावः। शुद्ध शब्दस्य निष्पत्तिर्यथा - शुध् धातोःक्त (पा०सू० ३।४।२१) प्रत्ययः। अस्य विषये यथा मेदिनीकारः—शुद्धस्यात्विषु केवले निर्देषे च पवित्रे चेति। कल्पद्रुमे ( पृ० १२० ) यथा- शुक्लः इति धरिणिः। रागान्तरमिश्रितरागः इतिसंगीतशास्त्रम्। सैन्धवं मारीचमिति राजनिर्घण्टः। शुद्ध शद्धे प्रायः अन्ये कोषकारा अपि एष्वर्थषु सहमताः सन्तिः। धीशब्दस्य व्युत्पत्तिर्यथा-ध्यायत्यनया। ध्यानं वा। ध्यायते सम्प्रसारणञ्चे (वा० ३।२।१७८) ति क्विप्। हलः (पा०सू० ६।४।२) इति दीर्घः। धीर्ज्ञान भेदे बुद्धौ चेति मेदिनी (७८।२) अस्य पर्यायः मति शब्दे द्रष्टव्यः।

**शुभ्रिका**—शुभ्रा एव। अत्र प्रत्यस्थे (पा०सू० ७।३।४४) ति नित्यमित्वम्। शुभ्र शब्दस्य व्युत्पत्तिर्यथा शोभते। शुभदीप्ते। शोभायां वा धातोः रक् प्रत्ययः (उ० २।१३) शुभं दीप्तेऽभक्रे सिते इति हैमः (२।४७६)। मेदिन्यां (१२९।९२) यथा- शुभ्रं स्यादभ्रके क्लीव मुद्दीप्त शुक्लयोस्त्रिषु। कल्पद्रुमे (पृ० १२४) यथा- गुड़लवणम् रौप्यं कासीसमिति राजनिर्घण्टः। चन्द्रनमिति शब्दचन्द्रिका। प्राय एवमेवान्य कोशेषु।

**शूर्पणखा**—शूर्पाणीव कररुहा यस्या इत्यस्वपदविग्रहः। संज्ञात्वेन नित्य समासः। स्वागाच्चे (पा०सू० ४।१।५४) ति प्राप्त ङीपः नख मुखात् (पा०सू० ४।१।५८) संज्ञायामिति निषेधः। पूर्वपदात् (पा०सू० ८।४।२)। संज्ञायामगः इति णत्वम्। रावणभगिनी।-यथा रघुः (१२।३८) रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत। कल्पद्रुमे (प०पृ० १३०) तु शूर्पा इवनखायस्या इति व्युत्पत्तिः। वाचस्पत्ये (पृ०५३२७) दन्त्यसकारादिरयन्। अन्येष्वपि कोशेषु प्राय एवमेव।

**श्रियाउद्यतः**—श्रियै लक्ष्म्यै उद्यतः। श्रिये उद्यतः इत्यत्र ऐकार स्थाने आयादेशे (पा०सू० ८।३।१९) वैकल्पिके यकारलोपे (पा०सू०६।१।७८) कृते श्रिया उद्यतः पाक्षिके श्रियायुद्यतः इति। सुरासुर मानवाः।

**श्री**—श्रयति हरिम्। श्रिञ् सेवायां धातोः क्विच् वचिप्रेच्छति (उ० २।५७) क्विप् दीर्घश्च। लक्ष्मीः अस्य पर्यायः रमाशब्दे द्रष्टव्यः। यथा विष्णुपुराणे (७।८।१-३) श्रियश्च देवदत्तस्य पत्नी नारायणस्यया इति। सम्पत्तिः श्रीश्च लक्ष्मी श्चेति अमरः (२।८।८२)। श्रीवेषरचना शोभाभारतौ सरलद्रुमे लक्ष्म्या त्रिवर्ग सम्पत्तौ वेषोपकरणं मतौ इति विश्व (विश्व० १२५।२)। कल्पद्रुमेयथा ( प०पृ० १६५) अधिकारः प्रभा कीर्तिः इति धरणिः। वृद्धिः सिद्धिः इति शब्द रत्नावली। वृत्रार्हनमाता इति हेमचन्द्रः। कमलं विल्ववृक्षः वृद्धानामौषध मिति राजनिर्घण्टः। देवादि नाम्नः पूर्व श्री शब्द प्रयोगः कर्तव्यः। यथा—

**देवं गुरं गुरुस्थानं क्षेत्रं क्षेत्राधि देवताम्।**
**सिद्धं सिद्धाधिकारश्च श्री पूर्वं समुदीरयेत्।।**

इति राघवभट्टधृत प्रयोग सारदर्शनात्। स्वर्गगामित्वादिना सिद्धोऽधिकारो येषां नराणां इत्यनेन जीवतां श्री शब्दादित्वं नाम्नः। न तु मृतानां तथेति शिष्टाचारः। इति संस्कारतत्वम्।

**श्रीपति**—श्रियः पतिः। विष्णुः। अस्य पर्यायः कृष्ण शब्दे द्रष्टव्यः। श्री पतिर्विष्णु भूपयोः इति हैमः। (३।३।२६) श्री पतिःपुंसि पृथिवीनाथे च मधुसूदने इति मेदिनि। (६६।१६३)।

**श्रीशः**—श्रियः ईशः। विष्णुः। कल्पद्रुमे (प०पृ०१६९) यथा मुग्धबोधे श्रीशोऽधिशेतेऽहिमधिष्ठितोऽब्धिमध्यास्य घोषमथुरामनूष्य। यौ द्वारकामध्यषितो विकुण्ठमवाव सच्चावसतात् सहन्नः इति। श्रीरामः इति शब्दरत्नावली। एवंमेव अन्य कोशकाराणामभिप्रायः।

**श्वन्**—श्वयति। टु ओश्वि गति वृद्ध्योः धातोः श्वन्द अन् इत्युणादिना (उ० १।१५७) साधुः कुक्कुरः। तथा चामरः (२।१०।२२) कौलेयकः सारभेयः कुक्करो मृगदशंकः। शुनको भषकः श्वा स्यादिति। कुक्कुरस्त शुनिः श्वानः कपिलो मण्डलः शुनः इति वाचस्पतिः। कल्पद्रुमे (प०पृ० १७७) यथा—

**कुक्कुरः श्वा च भषकः शुनको मृग दंशकः।**
**कौलैयको रन्तिदेवः सारभेयो रतव्रणः।।**

कुक्करः दीर्घ सुरतः श्वानीग्रामभ्रगोऽपि च। वक्र पुच्छःशयालुः स्यात् शरत्कामयरतत्रपः। औषधादि योगितः श्वा स्यादलकोर्पयलर्ककः। मृगया कुशलः श्वा तु विश्वकद्रुः पुमान् इति।

**श्वश्रू**—स्त्री। श्वशुरस्य स्त्री। श्वशुरस्योकाराकारलोपश्चेति वार्तिकोक्त्या ऊङ्उकार लोपश्च। पति पत्नयोः प्रसूः श्वश्रूः इत्यमरः (२।६।३१) प्रायः एवमेवान्यकोशेषु।

**श्वस्**—पृषोदरादित्वात्साधुः। अत्रामरः (३।४।२२) अनागतोऽह्निश्वः। प्रायमेवान्य कोशेषु। यथा रामायण (२।६४।३९) श्वोमया सह गन्तासि जनन्या च समेधितः।

**संवत्सरः**—सम् वत्सरः इति स्थिते मस्यानुस्वारे (पा०सू०८।३।२३ ) वैकल्पिके परसवर्णे (पा०सू० ८।४।५९) संव्वत्सरः संवत्सरः इति। तस्य व्युत्पत्तिः यथा-सम्व सन्ति ऋतवो यत्र। समुपसर्गपूर्वके वस् निवासे धातो संपूर्वाच्चित् इति सर प्रत्ययः। सः स्यार्घधातुके (पा०सू० ७।४।४९) इति तः। अस्य पर्यायः यथामरे सम्वत्सरो वत्सरोऽद्वो हायनोऽस्त्री शरत् समा इति।

**संस्कर्ता**—संस्करोतीति। समुपसर्ग पूर्वक कृधातो तृच् (पा०सू०३।१।१३३) प्रत्ययः सम्परिभ्या करोतौ भूषणे (वा० ६।१।१८७) इति सुडागमः। सम् स्कर्ता इत्यत्र समः सुटि (वा०८।३।५) इति मस्य रूत्वे रोपूर्वस्य वैकल्पिके अनुनासिकागमे रस्य विसर्गे विसर्गस्य सत्वे। सँस्कर्ता अनुनासिकाभावेऽनुस्वारे (पा०सू०८।३।२) संस्कर्ता। संस्कारकः।

**सकाः**—तद् शब्दस्य प्रकृते अकचि सौत्यदाद्यत्वं पररूपं टाप् हलडयादिना सुलोपः। तत् शब्दे तकारस्य सकारः अत्रककारात् पूर्वाकारस्येत्वेप्राप्ते न या सयोरिति निषेधः (पा०सू०७।३।४५)। यथा ऋग्वेदे (१।१९१।११) इत्यत्तिका शकुत्तिका सकाजद्यासते विषमृग। एवमेव कल्पद्रुमादिषु। (प०पृ०२०८)

**सकेशा**—सह केशा यस्या इति। सह शब्द विद्यमानवाची। वोपसर्जनस्येति (पा०सू०४।१।५४) सभाव विकल्पः। स्वागाच्चेति प्राप्तस्य (पा०सू०४।१।५७) सहनञिति ङीपः निषेधः केशशब्दविषये अकेशा शब्दे विशेषो द्रष्टव्यः।

**सखि**—समानः ख्यायते लोकैः। समाने ख्यः सचोदात्तः (उ०३।१३७) इति इण्। टि लोपयलोपौ समानस्य सभावः अत्रामरः (२।८।१२) अथ मित्रं सखा सुहृत्।

**सखी**—सखि शब्दात् सख्योरश्वि (पा०सू० ४।१।६२) इति ङीप् प्रत्ययः सहचरी। तत्पर्यायः यथामरे (२।६।१२) आली सखी वयस्या चेति।

**सच्चित**—सच्च चिच्च। सत् चित् इतिस्थिते स्तोः श्चुनाश्चुः (पा०सू० ८।४।४०) इति श्चुनस्यासिद्धत्वात् जश्त्वेन तकारस्य दकारे तस्य श्चुत्वेन जकारे तस्य चर्त्वे सच्चिदिति। परमेश्वरः प्रभुः। यथा श्रीमद् भागवते (महात्मये १।१।१)–

**सच्चिदानन्द रूपाय विश्वोत्पत्यादि हेतवे।**
**तापत्रय विनाशाय श्रीकृष्णाय वयं नुमः।।**

**सजूः**—सह जुषते इति। जुषि प्रीति सेवनयोः धातोः क्विप् प्रत्ययः सहस्य सः संज्ञायाम् (पा०सू० ६।३।७८) इति ससजुषो (पा०सू० ८।३।६६) इति निपतानाद्

सहस्य सभाव: सुलोप: रुत्वम्। वोर्रुपधाया: (पा०सू० ८।२।७६) इति दीर्घ: यथा भागवते (६।१८।६७) सजूरिन्द्रेण पञ्चाशत देवास्तेमरुतोऽभवन्।

**सन्**–अव्य०। अस्ति। अस् भुवि धातो: लट: शतृश्नसोरल्लोप:। अत्रामर: सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्। मेदिन्यां यथा सन् साधौधीरशस्तयो:। मान्ये सत्ये विद्यमानेत्रिषु साध्वुभयो: स्त्रियामिति। धीरस्य पर्याय: विद्वान् पदे द्रष्टव्य:।

**सनत्**–अव्य०। सर्वदा नित्ये। इति सना शब्दस्य अमर (३।४।१७) टीकायां रामाश्रम: एवमेव कल्पद्रुमादिषु। (शब्द पृ० २३७) सनत् शब्दो ब्रह्मणि पुलिंग इति कल्पद्रुमादिषु तत्रैव।

**सना**–अव्य०। सनतीति। षण् सम्भक्तौ धातो: अप्रत्यय:। सना नित्ये इत्यमर: (ऋग्वेद ३।५४।९)। (शब्द पृ० २३८) सना पुराणमध्येम्यारात्। एवमेव कल्पद्रुमादिषु।

**सनात्**–अव्य०। नित्यमिति अमरटीकायां रामाश्रम: (अम० ३।४।१७)। चिरादिति कल्पद्रुमे (प०पृ० २३८)

**सन्त्सर:**–इत्यत्र अम्परकत्वाभावात् नश्छव्य प्रशानिति नकारस्य न रूत्वम्। त्सरु शब्दस्य व्युत्पत्ति: यथा-त्सर छद्मगतौ धातो: भृभंशी इत्यु:। अत्रामर: त्सरु खड्गादिमुष्टौ स्यादिति।

**सपत्नी**–समान: पतिर्यस्या: सा। इत्यत्र नित्यं सपत्न्यादिषु इति नकारादेश: ङीप् समानस्य सभावश्च। समानपतिका। सौत इति भाषा।

**सप्तन्**–सप् समवाये धातो: कनिन् तुट् च। इत्युज्वल:। संख्या विशेष:। बहुवचनान्तोऽयम् तद्वाच कानि यथा पातालम् भुवनम् मुनि:। द्वीप: सूर्याश्व: वारसमुद्र: स्वर: राज्यागंम् ब्रीहि: वन्हिशिखा पर्वत: इति कवि कल्पलतासप्त संख्या विशिष्ट:।

**सप्तर्षिणाम्**–सप्त च ते ऋषयश्चेति तेषाम्। दिक् संख्येति (पा०सू०२।१।५०) समास:। सप्त ऋषीणाम् इत्यत्र ऋत्यक: (पा०सू० ६।१।१२८) इति वैकल्पिके प्रकृतिभावे सप्तऋषीणाम्। प्रकृति भावा भावे गुणे रपरत्वे सप्तर्षीणामिते च सप्तर्षय: मरीचागिंराअत्रि: पुलस्त्य: पुलह: क्रतु: वशिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिन:। अत्रामर: सप्तवर्षयो मरीच्य त्रिमुखाश्चित्रशिखण्डिन:। इति प्राय एवमेव कल्पद्रुमादिषु।

**सम**–समतीति। समवैकल्ये धातो पचाद्यच् (पा०सू०३।१।१३४) सर्वमिति कल्पद्रुम: (शब्द प०पृ०२६६) अस्मिन्नर्थे सर्वनामसञ्ज्ञाभवति।

**समया**—अव्य०। समयनमिति। समुपसर्गपूर्वक इष् गतौ धातोः आः समिष् निकषिम्यामि ति आ प्रत्ययः। समीपम् तथाचामरः (३।३।२५२) समयान्तिकमध्ययोः इति। तत्रैव (अमर ३।४।७) समयानिकषाहिरुक् इति। एवमेव मेदिन्याम्। (१८४।६५) यथा शिशुपालवधे (माघ०६।७३) कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रं समयावनौधनमद भ्रमराणि। गमनञ्चगीतनिनस्य गिरोच्चैः समयावनौ धनमदभ्रमराणि। कल्पद्रुमे (प०पृ.२६९) यथा समया निकटेमध्ये मध्ये च निकषान्तिके हिरुङ्मध्ये विनार्थे च इति रुद्रः। हिरुग्युक्तच सामीप्ये। इत्यमरमाला। विज्ञापनमिति शब्द रत्नावली। प्रायः एवमेव वाचस्पत्यादिषु। (पृ०५२२९)।

**समानी**—समान शब्दात् नित्यं संज्ञा छन्दसोरेव केवलमामकभागधेयेति ङीप्प्रत्ययः। समान शब्दस्य व्युत्पत्तिः यथा समन्तादनित्यनेनेति समुपसर्गपूर्वकअन प्राणने धातोः घञ् प्रत्ययः। वायुः अस्य व्याख्या वायु प्रयोगे एव द्रष्टव्या। सह मानेन वर्तते इति व्युत्पत्तौ समानं मानं यस्य वेति समान शब्दस्य पर्यायः। सम शब्देऽवलोक्यः। मेदिन्या (९३।४६) यथा–समानं सत्समैकेषु त्रिषु ना नाभिमारुते इति। कल्पद्रुमे (शब्द पृ० २७२) यथा वर्ण भेदः इति हेमचन्द्र। स तु एकस्थानोच्चार्य वर्णः भेदः इति हेमचन्द्रः। स तु एक स्थानोप्च्चार्य वर्णः साम्यन्तवेक स्थानत्व मिति मुग्धबोध व्याकरणम् एकमर्थ यथा मनुः (मनु० ४।४०) नोपगच्छेत् प्रमत्तोऽपि स्त्रियमार्तवदर्शने। समानं शयने चैव न शयीत तया सह।

**सम्यक**—समञ्चतीति। समुपसर्ग पूर्वक अञ्चु धातोः क्विन् (पा०सू०३।२।५९) प्रत्ययः समः समि इति सम्यादेशः (पा०सू०६।३।९६) अत्र मेदिन्या (२८।१९) स्याछाया लिगंन्तु मनोज्ञे संगतेऽपि च तत्रैव सम्यक् दृढ़ं प्रशंसयोरिति यथा ऋग्वेदे (२।३।६) तन्तु ततं संवयन्ती समीची अज्ञस्य पेशः सदुधे पयस्वती। कल्पद्रुमे (प०पृ०२९०) यथा-सम्यक् संसाधनं कर्म कर्तव्यमधिकारिणा। निष्कामेन सदापार्थकाम्यं कामान्वितेन च।

**सम्राट**—सम्यक् राजति राजते वा। समुपसर्गपूर्वकं राजृदीप्तौ धातोः क्विप् (पा०सू०३।२।६०) प्रत्ययः। मोराजि समः (पा०सू०८।३।२५) क्वौ इति समो मकारस्यमादेशस्तेनानुस्वारोन। अत्रामरः (२।८।३) येनेष्टं राजसूयेन मण्डलस्येश्वरश्चः यः। शास्ति यश्चाज्ञया राज्ञः ससम्राट्।

**सर्पिष्करोति**—सर्पिः करोति इत्यवस्थायाम् इसुसोः सामर्थ्ये (पा०सू०८।२।४४) इति विसर्गस्य वैकल्पिके षकारे कृते सर्पिष्करोति। पक्षे सर्पिः करोतीति। सर्पिः शब्दस्य व्युत्पत्तिः यथा सर्पतीति। सप्लृ गतौ धातो आर्चेशुचिहुसृपीति इति इसिः। घृतमर्थः अस्य पर्यायः यथामरे (२।९।५२) घृतमाज्यं हविः सर्पिः इति। उदकमिति निर्घण्टुः। (नि०१।१२)

यथा मनुः (मनु० ३।२७४) अपि नः स कुले जायत योन दद्यात त्रयोदशीम्। पापसं मधुसर्पिर्भ्यां प्राक्छाये कुजस्य च। प्रायएवमेव अन्यकोशेषु।

**सर्पिष्कल्पम्**—सर्पिः कल्पमित्यत्र इणः (पा०सू०८।३।३९) षः इति विसर्गस्य षकारः। ईषदसमाप्तौ कल्पप् प्रत्ययः। ईषद समाप्तं सर्पिः इत्यर्थः।

**सर्पिष्कम्**—सर्पिः कमित्यत्रापि विसर्गस्यषकारः (पा०सू०८।३।३९)। अज्ञाते कुत्सिते इत्यादिनाकः।

**सर्पिष्काम्यति**—पूर्वप्रयोगवत्। सर्पि आत्मन इच्छतीत्यर्थे सुप (पा०सू०३।१।८) आत्मनः इत्यनुवृत्यैव काम्यच्। (पा०सू०३।१।९) सनाद्यन्ताः (पा०सू०३।१।३२) इति धातुत्वात् लडादयः।

**सपिष्कुण्डिका**—इत्यत्रापि विसर्गस्य षत्वम् (पा०सू० ८।३।४५)। घृतकुण्डिकेत्यर्थः कुण्डमेव कुण्डिका। कुण्ड शब्दस्य व्याख्या कुण्डी प्रयोगे द्रष्टव्या।

**सर्पिष्टमम्**—सर्पिष् तममित्यत्र तकारस्य ष्टुत्वं (पा०सू० ८।४।४१) टकारः। टवर्गात्परत्वाभावात् न पदान्ते (पा०सू० ८।४।४२) ति न ष्टुत्व निषेधः। अतिशयेन सर्पिः। अतिशयाने तमप् प्रत्ययः। (वाच०प०पृ०५२५७)

**सर्पिष्पाशम्**—याप्ये पाशप् (पा०सू०५।३।५५) प्रत्ययः। सर्पिः पाशमित्यत्र विसर्गस्य षत्वम्। (पा०सू० ५।३।४७) कुत्सितं सर्पिः।

**सर्वः**—सरति। सृगतौ धातोः सर्वनिघृष्व (उ० १।१५१) इति वन् प्रत्ययेन निपातनाद् सिद्धिः सृतमनेन विश्वमित्यपि व्युत्पत्तिः उणादि प्रकरणे।

**सहनासिका**—सहविद्यमानानासिका यस्याः। सहनञ् (पा०सू०४।१।५७) इति ङीष् निषेधः। नासिकाशब्दस्य व्युत्पत्तिः नासिकाशब्दे द्रष्टव्या।

**सहसा**—अव्य। सहते। सह मर्षणे धातोः असाः प्रत्ययः। इत्यमरकोशस्य (अम०३।४।७) रामाश्रयीटीकायाम्। सह + सो + डा। इति वाचस्पत्ये। (वाच०ष०पृ०५२६७) अतर्कितः इत्यमरः।

**सहितोरू**—हितेन सह सहितौ उरू यस्याः सा। संहित (पा०सू०४।१।७०) शफ लक्षणवामादेश्च ति इति सूत्रे पठित सहितसहास्या चेति वकव्यमिति वार्तिकेन् ऊङ् प्रत्ययः।

**सहोरुः**—सहेते इति सहौ रतिकालमर्दने उरू यस्याः सा। पूर्व वार्तिकेन ऊङ् प्रत्ययः।

**साकम्**—सह अकनम्। अम् प्रत्ययः। सहस्य (पा०सू०६।३।१८) इति सादेशः। आभीक्ष्ण्ये (पा०सू०३।४।२२) इति वा। अत्रामरः (अम०३।४।४) सार्धं तु साकं सत्रा समं सह। एवमेव कल्पद्रुमादिषु (प०पृ०३२१)।

**सानु**—सन्यते सेव्यते मुनि प्रभृतिभिरति। सन् सेवार्यां धातोः दृसनिजनीति इति उण् प्रत्ययः। पर्वतसमभूभागः तत्पर्यायः यथामरे (अम०२।३।५) स्नुः प्रस्थः सानुरस्त्रियो। मेदिन्या (८४।२२) यथा सानुरस्त्री वने प्रस्थे वात्यामार्गाग्रके विदे इति कल्पद्रुमे (प०पृ०३३१) यथा अर्कः पल्लवः इति जटाधरः। एवमेव वाचस्पत्यादिषु। (पृ०५२८०)

**सायम्**—स्यति समापयति दिनमिति। सो धातोः बाहुलकात् णम्। युगागमश्च। अत्रामरः (३।४।१८) सायं साये इति। कल्पद्रुमे (प०पृ०३३९) यथा-सन्ध्या। इति राजनिर्घण्टः। तथा दिनान्ते पुंसि आयः स्यात् सायाहणे सायमव्ययम्। इति शब्दार्णवः यथा भागवते (६।८।२०) देवोऽपराहणे मधुहोग्रधन्वा सायं त्रिधामा वतु माधवो माम्।

**सायहणः**—सायमहणः। संख्या (पा०सू०६।३।११०)। विसायेति ज्ञापकात् समासः।

**सारंगः**—सारानि अंगानि यस्य। सारअंग इति स्थिते सवर्ण (पा०सू०६।१।१०१) दीर्घ प्राप्ते शकन्ध्वादित्वात् (बा०६।१।९४) पररूपम्। सार शब्दस्य पर्यायः यथामरे (३।३।१७१) सारो बले स्थिरांशे च न्यायेक्लीव वरेत्रिषु मेदिन्या (१२९।९५-९६) यथा सारो बले स्थिरा शे च मजिपुंसिजले घने न्याये क्लीवं त्रिषु वरे इति।

**सारङ्०गी**—सारगः शब्दात् अन्यतोङीष् इति ङीष्प्रत्ययः। वाद्यविशेषः इति केचित् इति कल्पद्रुमे। (प०पृ०५२८४)।

**सार्धम्**—अव्य। सह ऋध्नर्वनमिति। ऋधु वृद्धौ धातोः बाहुलकात्कम् प्रत्ययः। अस्य पर्यायः साकं शब्देद्रष्टव्यः।

**सिमः**—षिञ् बन्धने धातोः अविसिविसि शुषिभ्यः (उ०१।१४३) कित् इति मन् प्रत्ययः। सच कित्। समुदायः। सिमः सर्वः इति सिद्धान्तकौमुदी। एवमेव वाचस्पत्ये (प०पृ०५२५८) कल्पद्रुमादिषु (प०पृ०३५४)।। यथा ऋग्वेदे (१।११५।४) रात्री वासस्तनुतेसिमस्मै।

**सीमा**—सीमते षिञ् बन्धने धातोः नाम्नसीमन् (उ०४।१५१) इत्यादिना निपातितः मनः (पा०सू०४।१।११) इति न ङीप। डाबुभाभ्यामिति इति पक्षे डाप्। अत्रामरः (२।२।२०) सीमासीमे स्त्रियमिमौ। मेदिन्यां (९४।५५) यथा सीमा घाट स्थिति क्षेत्रेष्वण्डकोशेऽधिपे च स्त्रियामिति। कल्पद्रुमे (प०पृ०३५८) यथा ग्रामादीनामवधारितान्न भागः। तत्पर्यायः मर्यादा अवधिः आघाटः इति जटाधरः।

**सुखार्तः**—सुखेन ऋतः। इतयत्र सुप्सुपेति (पा०सू० २।१।४) समासे। सुख ऋतः इति स्थिते गुणं बाधित्वा ऋते च तृतीया समासे (वा०६।१।८९ इति वृद्धिः रपत्वम् (पा०सू० १।१।५१) सुख शब्दस्य व्युत्पत्तिः यथा-सुखयति। सुख-तत्क्रियायं धातो भावेऽच प्रत्ययः। (विश्व०२२।३) शोभनानि खान्यनेन इति रामश्रमीटीकायाम् अत्रामरः (१।४।२४-२५) मुत्प्रीतिः प्रमदो हर्ष प्रमोदामोद सम्मदाः। स्यादानन्द पुरानन्द शर्मशात सुखानिचेति। सुखं शर्मणि नाके च सुखा पुर्यां प्रचेतसः इति विश्वमेदिन्यौ।

**सुगण्**—सुगणयतीति। गण संख्याने धातोः विच् प्रत्ययः। सुन्दरगणकः। एवमेव कल्पद्रुमे। (पृ०३६५) तत्र क्विप् प्रत्ययः।

**सुजघना**—सु शोभने जघने यस्याः। बह्वचत्वात् ङीष्निषेधः। जघन शब्दस्य व्युत्पत्तिः यथा हन्यते। हन्तेः शरीरावयवे (उ०५।३२१) द्वे चेत्यच् प्रत्ययः। क्लीवे तु जघनं स्यात् स्त्रियाः श्रोणियुगेभागे कटावपि।

**सुज्ञाना**—सुशोभनं ज्ञानं यस्याइति। अमूर्ततत्वात् न स्वागत्वामतः स्वागाच्चोपसर्जनाद संयोगोपधादि ति नङीष्।

**सुदिव**—सु शोभनं द्यौर्यस्येति। द्यौ शब्द विषये तत्रैव द्रष्टव्यः।

**सुधी**—सुष्ठु ध्यायतीति। ध्यैचिन्तायां धातोः ध्यायते ( वार्तिक ३।२।१८०) सम्प्रसारणञ्चेति क्विप् सम्प्रसारणञ्च। पण्डितः अस्य पर्यायः विद्वान् शब्दे द्रष्टव्यः।

**सुनौ**—सु शोभना नौर्यस्येति। शोभन नौका विशिष्टः इत्यर्थ शोभना नौर्यत्र यस्य इति वा व्युत्पत्तिः शोभन नौकायां स्त्री। जलमिति मुग्धबोध टीकायां दुर्गादासः कल्पद्रुमे।

**सुपुच्छी**—सु शोभनं पुच्छमस्याः। पुच्छाच्चेति (वा०४।१।५५) वैकल्पिके ङीप्। पुच्छ शब्दस्य व्युत्पत्ति यथा पुच्छतीति पुच्छ प्रमादे धातोर च (पा०सू०३।१।१३४) प्रत्ययः पृषादेरादितवात् (पा०सू०६।३।१०९) पुच्छभाण्ड (पा०सू०३।१।१२०) इति निपातनाद् वा। अत्रामरः (२।८।५०) पुच्छोऽस्त्री लूमलांगूले। मेदिन्यां (२९।५) यथा पुच्छः पश्चात् प्रदेशः स्यात् लांगूले पुच्छमिष्यते। एवमेवान्यदपि।

**सुरापीती**—सुरा पीता ययेति। अस्वागं (पा०सू०४।१।५३) पूर्वपदाद्वेति वैकल्पिके ङीष्। सुरा शब्दस्य व्युत्पत्तिः यथा-सुष्ठु राति याम्। रादाने धातोः स राजयत्यनयावा रै शब्दे धातो आतश्चोपसर्गे (पा०सू०३।३।१०६) इत्यङ। सुराचषकमद्ययोः। पुलिंगस्त्रिदिवे स्यादिति मेदिनी। (१२९।९८)।

**सुशोफा**-सु अधिकः शोफः श्वपथुःयस्या इत्यत्र विकारजत्वात् न ङीष् (पा०सू०४।१।५४) शोफ शब्दस्य व्युत्पत्तिः यथा-शवति। शव गतौ धातोः बाहुलकात्

कः यश्च। च्छवोः (पा०सू०६।३।१९) इत्यूठ। शोफः औषधि भेदेस्यादुत्कृते त्वग्विवर्धने इति हैमः (२।३०६)। अमरेण (२।६।५२) यथा शोफस्तुश्वयव्युः शोथः इति। एवमेव वाचस्पत्यादिषु (ष०पृ०५१४४)।

**सुश्लोकेति**—सुश्लोक इति इत्यवस्थायाम् अप्लुतवदुपस्थिते (पा०सू० ६।१।१२९)। यथा श्लोकयते। श्लोकसंघाते धातोः घञ् प्रत्यय (पा०सू०३।३।१८) श्लोकस्तु अप्लुतवद भावेप्रकृति भावाभावेसति गुणः। श्लोक शब्दस्य पर्यायः श्लोकस्त पद्मबन्धे यशस्यपि।

**सुष्ठु**—अव्य०। सुतिष्ठतीति। सूपसर्ग पूर्वक स्थाघातोः अप दुखसुस्थः इति कुः। सुषमादित्वात् षत्वम्। सुष्ठु प्रशंसनेऽपि स्यादत्यर्थे च निगद्यते इति मेदिनी। अति शयार्थस्य पर्यायः यथामरे बलवत् किमुत्स्वत्यती व च निर्भरे सत्यमिति संक्षिप्त सारोणादिवृत्तिः।

**सुस्तनी**—सु शोभनो स्तनो स्तनाकृती अवयवो यस्या इति। प्रतिमेति शेषः। प्रतिभागतयोः स्तनाकृतिकावयवयोः कदाचिदपि प्राणिस्थत्वाभावात् प्राण्यन्तरे अहस्तत्वाच्च पूर्व लक्षणद्वयस्यापि अप्रवृत्तेर्लक्षणान्तरं तेन चेत्थं युक्तं युतमिति ततः वैकल्पिके ङीष् (पा०सू०४।१।५४) स्तनशब्दस्य व्युत्पत्तिः यथास्तनति कथयति यौवनोदयम्। स्तन्यते शद्बापयते वा कामुकः। सूत्र शब्दे धातोश्च (पा०सू०३।१।१३७) प्रत्ययः। पुंसि (पा०सू०३।१।११८) संज्ञामिति घो वा तत्पर्यायः कुचः इत्यमरः (२।६।७७) कल्पद्रुमे (शब्द० षृ०पृ०४३१) यथा कुचः उरोजः वक्षोजः पयोधरः वक्षोरुहः उरसिजः तस्याग्रं चुचुकमिति शब्दरत्नावली। तस्य शुभलक्षणं यथा-गारुड़े (ग०६५।५५) अरोमशौ स्तनौ पीनौ घनावविषमौ शुभौ कठिनावक्रेमसुरी मृदुग्रीवा च कुम्बुमा।

**सुस्वेदा**—सु शोभनः स्वेदः उदक प्रसवेयस्या। स्वेदस्य शोभनत्वन्तु दुर्गन्धाभावः। द्रवत्वात (पा०सू०४।१।५४) नङीष्। स्वेद शब्दस्य व्युत्पत्तिः यथा-स्विद्यते अनेनागंमिति धञ् प्रत्ययः। स्वेदो घर्मे स्वदने च इति हैमः (०२।२४१) घर्मस्य पर्यायः यथामरे (अम०१।७।३३) घर्मो निदाघः स्वेदः स्यादिति। एवमेवमेदिन्याम्। (७५।१७)।

**सूतिका**—इत्यत्र सूतका पुत्रकावृन्दारकाणां (वा०७।३।४५) वेति वक्तव्यमि तिकान् पूर्वस्याकारादेशो वेत्यर्थः। सूतक शब्दस्यनिष्पतिर्यथा-सृ धातोक्त प्रत्ययः। टाप्। ततः स्वार्थे कन्। यद्वा सूतं-प्रसवोऽस्यस्यामिति ठन्। नव प्रसूता। यथा शावस्योपरिशावेतु सूतको परि सूतके। शेषाहोभिर्बिशुद्धि स्यादुदक्यां सूतिकां बिना। इति कल्पद्रुमे। (ष०पृ०३९२)।

**सूरी**—सूर्यस्य स्त्री। देवता भावात् न चाप् (वा०४।१।१८) अतः पुंयोगादाख्यायामि (पा०सू०४।१।४८) ति ङीष्। सूर्य तिष्यागस्त्ये (पा०सू०४।१।१८) ति यलोपः।

कुन्ती। कल्पद्रुमे (प०पृ०३९५)। यथा सूघातोः किनः ततः ङीष्। राजसर्षपः। इति रत्नमाला। विदुषी इत्युणादिवृत्तौ उज्ज्वलदत्तः–

सरति आकाशे सुवति कर्मणि लोकं प्रेरयतीति सृ गतौ सु।
प्रेरणो वा घातोः राजसूय सूर्य इति क्यप् प्रत्ययः।।

**सूर्या**–सूर्यस्य स्त्री देवता। सूर्या दैदेवतायां (वा०४।१।१८) इति चापि सर्वर्ण दीर्घः। कल्पद्रुमे (प०पृ०३९७) यथा सूर्यभार्यासन्ज्ञा। इति शब्दरत्नावली। इन्द्रावरुणी इति राजनिर्घण्टः। नवोढा इति शब्दरत्नावली। यथाभागवते (१०।१।२९) तस्यां हि कर्हि चिच्छौरिर्वसुदेवः कृतोवद्वहः। देवक्या सूर्यया सार्थ प्रयाणे रथमारुहत्।

**सेः**–अः विष्णुःतस्यापत्यम् (पा०सू० ४।१।९५)। तेन सहेति (पा०सू०२।२।२८) तुल्य योगे इति समासः वोपसर्जनस्येति (पा०सू०६।३।२२) सत्वम् आद्गुणः (पा०सू०६।१।८७)।

**स्त्री**–सृत्यायति गर्भो यस्याम् सृत्यै शब्द संघातयोः धातो स्त्यायते (उ०४।६६) इति ड्रट् प्रत्ययः। डित्वाट्टित्वाट्टिलोपः (पा०सू०६।४।१४३) यलोपः (पा०सू०६।१।६) टित्वात्ङीष् (पा०सू०४।१।१५) स्तनन्यादिमती तत्पर्यायः योषिदखला योषा नारी सीमन्तिनीवधूः प्रतीपदर्शिनी वामा वनिता महिला तथा इत्यमरः (२।६।२)। कल्पद्रुमे (शब्द प०पृ०४३५) यथा–प्रिया रामाजनिः जनी योषिता जोषित् जोषा जोषिता वनिका महलिका मेहला इति शब्दरत्नावली। शर्वरी सिन्दूरतिलका सुभ्रुः इति जटाधरः। सुनयना वामदृक् अंगना ललना कान्ता पुरन्ध्री वरवर्णि सुतनु तन्वी तनुः कामिनी तन्वंगी रमणी कुरंगनया भीरुः भामिनी विलासिनी नितम्बिनी मत्तकासिनी सुनेत्रा प्रमदा सुन्दरी अञ्चितभूः ललिता वासिता भामिनी वरारोहा नतांगी त्रिनता वरा श्यामा चारुवर्धना इति राजनिर्घण्टुः। सा चतुर्विधा पद्मिनी, चित्रिणि शंखिनी हस्तिनी तासां लक्षणानि यथा–

**भवति कमल नेत्रा नासिका क्षुद्ररन्ध्रा, अविरलकुचयुग्मा दीर्घ केशी कृशांगी।**
**मृदुवचन सुशीला नृत्यगीतानुरक्ता सकल सुतनुवेशा पद्मिनी पद्मगन्धा।**

**भवति रति रसज्ञा नातिदीर्घा न खर्वा, तिलकुसुम सुनासा स्निग्धदेहोत्पलाक्षी।**
**कठिन कुच धनाढ्या सुन्दरी सा सुशीला सकल गुण विचित्रा चित्रिणी चित्रवक्त्रा।।२।।**

**दीर्घा सुदीर्घनयना वर सुन्दरी या, कामोपभोगरसिका गुणशीलयुक्ता।**
**रेखत्रये च विभूषित कण्ठदेशा सम्भोग केलि रसिका किल शंखिनी।।३।।**

**स्कूलाधरा स्थूल नितम्बभागा स्थलागुंली स्थूलकूचा सुशीला। कामोत्सुका कामरतिप्रिया च नितम्ब खर्वा खलु हस्तिनीशा।।४।।**

**पद्मिनी पद्म गन्धा च मीनगन्धा च चित्रिणी।**
**शंखिनी क्षारगन्धा च मदगन्धा च हस्तिनी।।५।।**
**शशके पद्मिनी तुष्टा मृगे तृष्टा च हस्तिनी।**
**पद्मिनी शशयोर्योनि मेको चतुरंगलौ।।६।।**
**चित्रिणीमृगयोर्योनिमेद्रकौ च तथाविधा।**
**शंखिनीवृषयोरष्टागुलो तावेव सम्मतौ।।७।।**
**हस्तिनी वाजिनोरेष तावव द्वादशांगुलौ।**
**तस्या अवस्था यथा आषोडशात् भवेद्वाला तरुणी त्रिंशता मता।।**

स्त्रियाः शुभाशुभ लक्षणानि यथा- श्रीहरिरुवाच यस्यास्तु कुन्चिता केशा मुखञ्च परिमण्डल। नाभिश्च दक्षिणावर्ता सा कन्या कुलवर्दिनी।

या च कान्चन वर्णाभा रक्त हस्त सरोरूहा।
सहस्त्राणांन्तु नारीणां भवेत् सापि पतिव्रता।।
वक्रकेशा च या कन्या मग्डलाक्षी च या भवेत्।
भर्ता च म्रियते तस्या नियतं दुःखभागिनी।।
पूर्णचन्द्रमुखी कन्या बालसूर्य सम प्रभा।
विशालनेत्रा विम्बोष्ठी सा कन्या लभत्ते सुखम्।।
रेखाभिबहुभिःक्लेशं स्वल्पाभिर्धनहीनताम्।
रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतांव्रजेत्।।
कार्येऽपि मन्त्री पत्नी स्यात् सखी स्यात् करणेषु च।
स्नेहेषु भार्यामाता स्यात् वेश्या च शयने शुभा।।

**स्त्रैणी**—स्त्रीषु भवः। स्त्रीभ्य आगतः। स्त्रीभ्यो हितो वा। स्त्री शब्दात् स्त्री पुंसाभ्यां नञ्स्नाञौ भवनात् (पा०सू० ४।१।८७) इति नञ् प्रत्ययः स्त्रीत्वविवक्षायां नञ् स्नसीकृख्युसतरुणतलुनानामुप (पा०सू० १।१।६४) संख्यानामि ति ङीप्प्रत्ययः। एवमेव कल्पद्रुमादिषु (प०पृ०४४२) स्त्रैणशब्दे। तत्र स्त्रीसम्बन्धी इति मुग्धबोधव्याकरणम्।

**स्थूली**—अकृत्रिमेऽर्थे जानपदकुण्डगोणस्थल—इति ङीष् इदानीनन्तनपुरुषपरिष्कृताभूमिः कृत्रिमा तदाभिन्नेत्यर्थः। स्थूलान्या कृत्रिमेत्यर्थः। स्थूलयोदकं परिगृहणन्ति इतियजुर्वेद।

**स्थूलोतुः**—स्थूलश्चासौ ओतुः। स्थूल ओतुः इत्यत्र ओत्वोष्ठयोः समासे (वा० १।१।६१) इति वैकल्पिके पररूप। पाक्षिके वृद्धौ स्थूलौतुः। स्थूल शब्दस्यव्युत्पत्तिः यथा स्थूलयति

स्थूल वृंहणो धातोरच (पा०सू० २।१।१३४) प्रत्ययः। पीनपीन्वीन स्थूल पीवरे इत्यमरः। (अम०३।१।६१) स्थूलः पीनः जडे इति हैमः (२।५।२८)। स्थूलं कूटे च निष्प्रज्ञे पीवरे पृयन्यलिंगकमिति मेदनी (१४९।५६) कल्पद्रुमे (प०पृ०४६३) यथा- वनसः इति राजनिर्घण्टः विष्णुः। इति महाभारतम्। (महा०१३।१४९।१०३) कन्दविशेषः रक्तलशुनभिति केचित्। फलभेदे इति रत्नमालाकोशः। ओतु शब्दस्य व्याख्या यथा अवति विश्वम् आखुभ्यो गृहम् वा। अव रक्षणादौ धातोः। सितानि (उ०१।६९) इति तुन्। ज्वरत्व (पा०सू०६।४।२०) इत्यूठोदीर्घः गुणः (पा०सू०६।१।१०१) ओतुर्विडालो मार्जारोवृषदंशक आखुभुक् इत्यमरः। (अम०२।५।६) पीन मार्जरः। जडमार्जरः इत्याद्यर्थः।

**स्म–**अव्य स्मयते। स्मिङ्० ईषद्धसने धातो डः। (अम०२।५।६)। पादपूरणे यथामरः ( ३।२।१०१) तुहि चस्म ह वै पादपूरके।

**स्मृति–**स्मरणम्। स्मृत आध्याने धातोः क्विन् (पा०सू०३।२।९४) प्रत्ययः। अत्रामरः (अम०१। ) स्मृतिस्तु धर्मसंहिता। तत्रैव (अम०१।७।२९) स्याच्चिन्तास्मृतिराध्यानमिति। कल्पद्रुमे (पृ०४६३)।

**स्रक्–**सृजति शोभां सुखं वा, सृजन्ते इति वा। सृज् विसर्गे धातो क्विन् प्रत्ययः (पा०सू०३।१।५९) अमागमः (पा०सू०६।४।४७)। अण् (पा०सू०८।२।३०) रेफः। कृत्वं (पा०सू० ८।२।३०) जश्त्वे (पा०सू० ८।४।५६) चर्त्वे स्रक् स्रगिति। माल्यंमालासृजौ मूर्घ्नि इत्यमरः (२।६।३८) एवमेव कल्पद्रुमादिषु (प०पृ०४६५)। यथा मनुः (४।६६) उपानहौ च वासञ्चधृतमन्यैर्नधारयेत्। उपवीतमलङ्कारं सज्रं करकमेव च।।

**स्रस्तम्–**संस्यते स्म। स्रंसु अवस्रंसने धातोःक्त प्रत्ययः। अत्र पदान्तत्वाभावात् वसुस्रंसुध्वंस्वनडुहां (पा०सू०८।२।७२) दः इति र्नदत्वम् । अस्य पर्यायः अमरे (अम० ३।१।१०४) यथा स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितभिति। एवमेव कल्पद्रुमादिषु (शब्द०प०पृ०४६१)। यथा माघे-स्रस्तावगुण्ठन पटाः क्षणलक्ष्यभाण वक्त्रश्रियः समयकौतुकमीक्षते स्म।।

**स्वः–**स्वनति स्वन्यतेवा स्वन शब्देधातोः अन्येभ्योऽपिडः (वाच०३।२।१०१) स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीयै स्वो स्त्रियां धने इत्यमर (३।३।२२१) स्वोज्ञातात्मनो स्वं निजे धने इति हैमः (हैमः १।५) एवमेव मेदिन्यां (मे०१५७।२) यथा-स्वः स्यात् पुंसि आत्मनि ज्ञातौ त्रिस्स्वात्मीये स्त्रियां धने इति। आत्मीयार्थस्य पर्यायः यथामरे (अम०२।६।३४) सगोत्रवान्धवज्ञातिबन्धुस्वस्वजनाः समाः। आत्मनि आत्मीये चार्थेऽस्य सर्वनामता।

**स्वङ्गी**--सु शोभनानि अंगानि यस्या:। अंगमात्र कण्ठेभ्यो वक्त व्यमिति वैकल्पिके ङीष्। पाक्षिके स्वंगा। अंगशब्दस्य व्युत्पत्तिः यथा–अंगति अगि गतौ धातोश्च (पा०सू०२।१।१२४) प्रत्ययः। अंगप्रतीकेऽवयवोऽमघनः।। इत्यमरः (अम०२।६।७०)।

**स्वच्छया**–स्वस्य छाया। छे चे ति तुगा गमः श्चुत्वार । छाया शब्दस्य व्युत्पत्तिः यथा-छयति। छो छेदवे घातोःश्याद्वयधा-इति णः। आतो युक्। (पा०सू०७।३।३३)। छाया सूर्यप्रिया कान्तिः प्रतिबिम्ब सनातपः इत्यमरः (अम०३।३।१५)

**स्वधा**–अव्य० स्वद्यतेऽनेन। स्वद् आस्वादने धातोः आ प्रत्ययः पृषमेदरादित्वात् (पा०सू०६।३।१०९) दस्यघः। अस्य पर्यायः वषट् प्रयोगे द्रष्टव्यः कल्पद्रुमे (शब्द प०पृ० ४६८) यथा स्वदेर्घश्च इति दस्य धः। इत्युणादिवृत्तौउज्वलदत्तः।

**स्वन्डुत्**–सु शोभनाः अनडवाहो यस्य कुलस्येति बहु बहुब्रीहौ स्वन डूह शब्दात् विभक्ति कार्यम्। अनड्डह शब्दस्य व्याख्या तत्रैकद्रष्टवा।

**स्वप्**–सु शोभन आपो यस्मिन् सुरसीति। ऋकपूरब्धूः (पा०सू०५।१।७४) इति समासान्तस्तु न भवति, न श्जनादि (पा०सू०५।४।५९)

**स्वभूः**–स्वेनैव भवति। भुवः क्विप्। स्वमृर्ना ब्रह्मणि हरौ इति मेदिनी (मे०१०६।१०) हरि शब्दस्य पर्यायः कृष्णः प्रयोगे विष्णु अर्थे द्रष्टव्यः। शिवे ईश्वरे कामे च इति वाचस्पत्यम्। (वाच०प०पृ०५३८१) ब्रह्मनि यथा भागवते (श्रीमद्भागव०५३८१) तान् वमाषे स्वभूःपुत्रान् प्रजाः सृजत् पुत्रकाः। कल्पद्रुमादिष्वपि (शब्द प०पृ०४७४) एवमेव।

**स्वयम्**–अव्य० सुष्ठु श्रयते। अय गतौ धातोरय् प्रत्ययः। स्वयमात्मना इत्यमरः (अम०३।४।१६) कल्पद्रुमे (शब्द०प०पृ०४७४)। यथा आत्मनेत्यर्थे स्वयं तृतीयान्तम्। यथा स्वयम्भुः। इति भरतः। यथा रघु (रघु१।१७। ) यथा हीनं विघातर्म्मा कथं पश्यन्न इयसे। सित्कं स्वयमिव स्नेहाद् वन्ध्यमात्रमपादपम्। एवमेव वाचस्पत्यादिषु (वाच०प०पृ०६३८१)।

**स्वयम्भूः**–स्वयम्मभवतीति।`क्विप् (पा०सू०३।२।१७९) प्रत्ययः। चतुर्मुख ब्रह्मा। अस्य पर्यायः ब्रह्मा शब्दे द्रष्टव्यः। कल्पद्रुमे (शब्द प०पृ०४६४) यथा जिनधकवर्तिविशेषः। तत्पर्यायः रुद्रतनय इति हेमचन्द्रः। कालःइति शब्द रत्नावली। कामदेवः विष्णुः शिवः इति केचित्। माषपर्णी लिगिंनी इति राजनिर्घण्टः। स्वयमुत्पन्ने अपोरुषेये च त्रिलिंगः। यथा मनुः (मनु १।३) त्वमेकोऽहयस्य सर्वस्यविधानस्य स्वयम्भुवः। अचिन्तस्याप्रमेयस्य कार्यत्वार्थवित् प्रभो।

**स्वः**—स्वर्यते स्तूयते इति। सू शब्दोपतापयोः धातोः अन्येभ्योऽपि (पा०सू०३।२।७५) दृश्यन्ते इति विच्।

**स्वसा**—सुष्ठु अस्यते क्षिप्यते सपसर्गपूर्वक असु धातोः सावसे (शब्द प०पृ०४६४) इति ऋन् प्रत्यय भगिनी इत्यमरः (उ०२।९६)।

**स्वस्ति**—स्वसति स्वस्यति वा। अस् दीप्तौ अषु क्षेपणे वा धातोः। क्तिच् (शब्द०प०पृ० ४८८) प्रत्ययः। बाहुलकात्तिर्वा। (पा०सू०३।३।१७४) बहुलवचनात् न मृभावः। स्वस्त्याशीः क्षेमपुष्पादौ इत्यमरः। स्वस्ति मंगलाशीर्वादपापनिर्णेजनादिषु इति माभुरिः। स्वस्तिस्यान्मर्गले पुण्येऽप्याशंसायामपि क्वचित् इति मेदिनी। (अम०३।३।२४१)।

**स्वाहा**—सुष्ठु आहयन्ते देवा अनेनेति। सु + आ + हे + जा। देव हविदर्निमन्त्रः। अस्य पर्यायः वषट् प्रयोगे द्रष्टव्यः।

**स्वैरः**—स्वेन स्वातन्त्रयेण इर्ते ईरति वा। ईर गते। कम्पने च प्रेरणे वा धातोः पचाद्यच् (पा०सू० ३।१।१३४) प्रत्ययः। स्वादिरेरिणोः इति वृद्धिः। केचित्सु अन्यथा व्युत्पादयन्ति यथा-स्वेनस्वयमेव न तत्संगत्यान्य इयर्ति। अच् (वा०६।१।९९) इति व्याख्या कुर्वन्त। तन्न। अचिगुणे स्वारः इति प्रसंगात्। स्वैरो मन्दे स्वतन्त्रे च इति हैमे (हेम २।४८२) एवमेव अमरे (अम०३।३।१९२) मन्द स्वच्छन्दयोः स्वैरः। प्रायं एवमेवान्यदपि। स्वच्छन्दे यथा रघुः (रघु०२।५) अव्याहतेः स्वैरगतेः स तस्याः सम्राड समाराघन तत्परो भृत्।

**स्वैरी**—स्वेन छन्देन ईरितुं सन्चरितुं शीलमस्येत्यर्थे सुप्यजातौ (पा०सू०३।२।८) इति णिनिः। स्वच्छन्दचारीत्यर्थः। स्व ईरिन् इति स्थिते वृद्िः।

**स्वैरिणी**—स्वे नैव ईरितुं शीलयस्याः। णिनिः। ङीप्। वृद्धिः व्यभिचारिणी इत्यमरः (अम०२।६।११) अस्य पर्यायः कूल टा शब्दे द्रष्टव्यः।

**ह**—अव्य। हन्ति हन् हिंसागत्योः धातोः डः (वा०३।२।१०१) ह स्यात् सम्बोधने पादुगुणे च विनिग्रहे। नियोगे च क्षिणायां स्यात् कृत्सायामपि दृश्यते इति मेदिनी (मे०१८६।८५) पादपुरपूरणे शब्दा स्म प्रयोगे द्रष्टव्यः।

**हनुः**—हन्ति कठिन द्रव्यादिकम्। हन् धातोः शृस्वृस्निही ति इत्युः स च नित्। कपोलद्वय परमुख भागः। इत्यमरः (अम०२।६।९०) हनुर्हट्ट विलासिन्धां मृत्यावस्त्रे गदे स्त्रियाम्। द्वयोः कपोलावयवे इति मेदिनी। (मे०८४।२५-२६) कल्पद्रुमे मया ताभ्यां कपोलाभ्या परोमुखःभागो हनुरुच्यते। यत्र जम्माख्या दन्ता जायन्ते इति सुभूतिः। हन्ति कठोरमपि द्रव्यं हनुः नाम्नीति डः। तत्परेति पाठेहनोस्त्रीत्वम्। हनु कपोलावयते द्वयोरिति

कश्चित्। तन्वार्देवा इत्यूपि हनुश्च। पुंस्यपीति स्वामी। पुंयोगे कर्णहनुनपुंसके श्मश्रु जानु च गुदन्चेति वररुचिः। इति भरतः। हट्ट विलाशिन्याः पर्यायः यथामरे (अम० २।४।१०३) धमन्यन्जनकेशी च हनुर्हटट् विलासिनी। वाचस्पत्ये (वाच०ष०पृ०५४१५) यथा रोगे अस्त्रभेद मृतौ च स्त्री इर्ति जटाधर कोषः।

**हन्त**—अव्य। हन्तिः हन् धातोः बाहुल्कात्सः। हन्तहर्षेऽनुकम्पायां वाक्यारम्भ विषादयोः। इत्यमरः (३।३।२४४) हन्तवानयारम्भ खेद विषाद् हर्ष सम्भ्रमे इति मेदिन्यामपि।

**हयी**—हयति गच्छतीति। हय धातोश्च प्रत्ययः। हिंनोतिति हि धातोश्च वा। हयस्य स्त्री। हयशब्दाद् ङीप् प्रत्ययः। हय शब्दस्य पर्यायः अर्वन शब्दे द्रष्टव्यः। घोटकी इत्यर्थ एवमेव कल्पद्रुमादिषु (शब्द प०पृ०५०६)

**हरिः**—हरति। हु हरणे धातोः अचद् इति इ प्रत्ययः। यं यानिलेन्द्र चन्द्रार्क विष्णु सिंहाशु वानिषु।

शुकाहि कपि मेकेषु हरिर्ना कपिले त्रिषु। इत्यमरः (मे०१३०।९९-१००)। एवं विश्वकोशे (वाच०पृ०५४१७)। हरिर्वाताकचन्द्रो यमोपेन्द्रमरीचिषु। सिंहाश्व कपिमेकाहि शुक लोकान्तरेषु च। हरिर्वाच्यवदाख्यातो हरित कपिलवर्णयोः इति। एवमेव मेदिन्यां (मे०१३०।९९-१००) हरिश्चन्द्रार्क वाताश्च शुकमेक ममाहिषु। कपां सिहे ने शो शक्रे लोकान्तरे पुमा वाच्यवत् पिंग हरितो।

**हलीषा**—हलस्य ईषा। हल ईषा इत्यत्र पर्रुपम्। (वा०१।१।६४) हल शब्दस्य व्युत्पर्त्तियथा-हलतीति। हल विलेखने धातोरच् (पा०सू०३।१।१३४) प्रत्ययः। विशेषः लांगलीषा शब्दे दर्शनीयः।

**हवि**—जयते अनेन। हुदानादौ धातोः अर्चिशुचिहुसपिच्छर्दिभ्यः (उ०२।१०९) इत्युणादिना इसिः। हविः समर्पहोतव्ये इति हैमः (हैम०२।६०९) अमरे (अमर २।९।५) यथा घृतमाज्यं हविः सर्पिः। यथा महाभारते (शब्द प०पृ०५५१)।

**न जातु कामः कामानामुपभोगेन साम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।।**

**हिरुक्**—अव्य० हिनोति। हि धातोः रुक्क प्रत्ययः। हिरुक शब्दो विनार्थे चमध्यार्थेऽपि च दृश्यते इति मेदिनी। (मे०१७९।१२)। विना शब्दस्य पर्यायः नाना शब्दे द्रष्टव्ययः।

**हहूः**—गन्धर्व विशेषः. अव्युत्पत्पन्नोऽयम्। किन्तु आहवयतीति। हेव् स्पर्धाया धातोः क्विप् सम्प्रसारणम्। आभीक्षणे द्वित्वम् इति व्युत्पत्रिस्तु कल्पद्रुमे (शब्द प०पृ०५४४)। यथा भागवते (श्रीमद्भागवत ८।४।३) योऽसौ ग्राहः सवै सद्यःपरमाश्चर्यरूपधृक्। मुक्तो

देवलशापेन हूहूर्गन्धर्वैसन्नम:।

**हृदय**–ह्रियते विषये: वृह्रो: षुम्दुकौ (उ०४।१००) च इति कथन् दृगागमश्चा हरति आहरति विषयानिति वा। हृदयं वक्षसि स्वान्ते वुक्कायामिति हैम: (अम०१।५।३१) स्नान्तस्य पर्याय: यथामरे। (अम०१।५।३१) चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन: मेदिन्या (मेदि०१।३१।११५) यथा–हृदयं मानसे वुक्कोरसोरपि नपुंसकम्।

हे–अव्य। हिनोति। हि धातो: बाहुलकात् हे। सम्बोधनम्। अस्य पर्याय: पाट् शब्दे द्रष्टव्य:। यथा वृहत् (मे०१८६।८८) संहितायाम्–

**जाया वा स्यात् जननी वा सम्भव: स्त्रीकृतो नृणाम्।**
**हे कृतघ्नस्तयोर्निन्दा कुर्वता वा कुतः सुखम्।।**

आह्वानम् असूयादि इति मेदिनी। (मे०१८६।८८)। कल्पद्रुमे (शब्द प०पृ०५४७) यथा हहो हुंहो अये अरे अपि इति भरत:। एवमेव वाचस्पत्यादिषु। (वाच०प०पृ०५४३५)।

**हे अक्क**–सम्बोधनैक वचनरूपम्। अम्बार्थनद्योर्ह्रस्व: (पा०सू० ४।३।१०७) इति ह्रस्वे विभक्तिलोप: (पा०सू०६।१।९९) अवका शब्दस्य व्युत्पत्तिर्यथा कं सुखं न कमित्यकम् दु:खं कायति ग्रहणाति इति। माता इति शब्दरत्नावली इति कल्पद्रुमे (शब्द प्र०पृ०४)।

**हे अम्ब**–अम्बा सद्वस्य सम्बुद्धौ रूपम्। अम्बा शब्दस्य व्युत्पत्तिर्यथा अभ्यते शब्दयते। अबि शब्दे धातो: गुरीश्चहल: (शब्द प्र०पृ०८७) इत्य प्रत्यय:। कल्पद्रुमे (शब्द प्र०पृ०८७) यथा व्युत्पत्ति: अभ्व्यते स्नेहे नोपगम्यते। अवि गतौ धातो कर्मणि धञ् प्रत्यय:। जननी। यथा आद्यशंकराचार्यण–जगदम्ब विचित्रमत्र किं परिपूर्णा कस्णास्ति चेन्मऽय अम्बाष्ठा इति राजनर्घिण्ट:।

**हे अम्बाले**–हे संयुक्ता ये लकास्तदवतां दृष्टोन सम्बोधनैक वचनरूपम्। अम्बाला शब्दस्य व्युत्पत्तिर्यथा-अम्बेति शब्दलाति धत्ते। ला-क। भातरि। इति वाचस्पत्ये। (वाच०प्र०पृ०३२९)

**हे अम्बिके**–हे असंयुक्ता ये लकास्तद्वता ह्रस्वीन अम्बेक अम्बिका स्वार्थे कन् स्त्रियां कटाप् । दुर्गा। अस्य पर्याय: कात्यायनी शब्दे द्रष्टव्य:।

**हे अल्ल**–हे सम्बोधनैक वचनम् ह्रस्वे: (पा०सू०७।३।१०७) विभोक्ति लोप:। अल्ला शब्दस्य व्युत्पत्ति यथा–अल्पते इत्यल् क्विप् अले भूषायै लाति ग्रहणाति। ला + क। तातयक्तौ - माता इति वोप देव:। अथर्ववेदे अल्लाल्लेत्यादिख्योतियवनोपास्य

परमेश्वरः इति कल्पद्रुमे। (शब्द प्र०पृ० १२१) वाचस्पत्ये (वाच०प्र०पृ०४१५) यथा-अल्पते इत्यल् क्विप् अले भूषायै लाति ग्रहणाति लोक मातरि। अलतीति अल पर्याप्तः सन् लाति सर्वानत्ति गृह्णाति जानाति वा ला-क। सर्वज्ञायां सर्वभक्षिकाया परमात्मदेवतायान्च। सा च अथर्ववेदे अल्लाल्लेत्यादि सूक्ते प्रसिद्धा।

**है**—अव्य०। हिनोतीति। हि गतौ धातोः बाहुलकात् हैः हे सम्बोधने आह्वाने इति मेदिनी। (मे०१८६।८८) एवमेव कल्पद्रुमावचस्पत्यादिषु (ष०पृ०५८३७)। सम्बोधनार्थस्यपर्यायः पाट् शब्दे द्रष्टव्यः।

**होतृकारः**—होतृ ऋकारः इति स्थिते ऋति (वा०६।१।१०१) सवर्ण ऋवे ति द्वयोः ऋकारयोः स्थाने ऋकारविलक्षणोनृसिंह वद द्व्यन्तरात्मा ऋकारो रेफ द्वयकान् कश्चिद् वर्णो भवति। एतदभावपक्षे होतृकार इति। अत्र कल्पद्रुमे होतृकारः शब्दे यथा-होतुर्लृकारः। होतुर्माता। इति मुग्धबोध व्याकरणम्।



# संकेत-सूची

| **संकेतः** | **ग्रन्थनाम** |
|---|---|
| अथर्ववेद | अथर्ववेद: |
| अभिधानचि० | अभिधानचिन्तामणि: |
| अभिज्ञान शा० | अभिज्ञानशाकुन्तलम् |
| अम० | अमरकोश: |
| आर्य स० | आर्यसप्तशती |
| ऋग्वेद | ऋग्वेद: |
| कथा स० | कथासरितसागर: |
| काव्य प्र० | काव्यप्रकाश: |
| कालिका पुराण | कालिकापुराणम् |
| कुमा० | कुमारसम्भवकाव्यम् |
| गरुड़ | गरुणपुराणम् |
| गीता | श्रीमद्भागवद्गीता |
| छत्रपति | छत्रपतिसाम्राज्यम् |
| छान्दोग्य | छान्दोभ्योपनिषद् |
| तैत्तरीय | तैत्तरीयोपनिषद् |
| त्रिकाण्ड | त्रिकाण्डशेष: |
| देवी भाग० | देवीभागवतम् |
| नानार्थ र० | नानार्थरत्नमाला |
| नानार्थ सं० | नानार्थ संग्रह: |
| नैषध | नेषधीयचरितम् |
| प० | परिभाषा |
| पद्म | पद्मपुराणम् |
| पर्यायमु० | पर्यायमुक्तावली |

| संकेतः | ग्रन्थनाम |
| --- | --- |
| ब्रह्म वै० | ब्रह्मवैवर्तपुराणम् |
| भट्टि० | भट्टिकाव्यम् |
| भाग० | भागवतपुराणम् |
| महाभा० | महाभारतम् |
| माघ | शिशुपालवधम् |
| मार्कण्डेय | मार्कण्डेयपुराणम् |
| मे० | मेदिनीकोशः |
| मेघ० | मेघदूतम् |
| युज० | यजुर्वेदः |
| रघु० | रघुवंशमहाकाव्यम् |
| राजत० | राजतरंगिणी |
| रामचरित | रामचरितमानस |
| रामायण | बाल्मीकीय रामायणम् |
| वाच० | वाचस्पत्यम् |
| वाजसनेय | वाजसनेय संहिता |
| विश्व | विश्वकोशः |
| शतपथ | शतपथब्राह्मणम् |
| शब्दर० | शब्दरत्नावली |
| शारदीया० | शारदीयाख्यनाममाला |
| शाश्वत | शाश्वतकोषः |
| शिवमहिम्न | शिवमहिम्नस्तोत्रम् |
| शिशुपाल | शिशुपालवधम् |
| सा०द० | साहित्यदर्पणः |
| सि०कौ० | वैयाकरणसिद्धान्तकौमुदी |
| हरिवंश | हरिवंशपुराणम् |
| हला० | हलायुधकोशः |
| हारीत | हारीतस्मृतिः |
| है० | हैमकोशः |
| उ० | उणादि |

| **संकेतः** | **ग्रन्थनाम** |
| --- | --- |
| च० | चतुर्थ |
| तृ० | तृतीय |
| डि० | द्वितीय |
| प० | पञ्चम |
| पा०सू० | पाणिनिसूत्रम् |
| पृ० | पृष्ठ |
| प्र० | प्रथम |
| वा० | वार्तिक |
| ष० | षष्ठ |



# सहायक ग्रन्थ सूची


१. अथर्ववेद:
२. अभिधानचिन्तामणि:
३. अभिज्ञानशाकुन्तलम्
४. अमरकोश
५. आर्यसप्तशती
६. ऋग्वेद:
७. कथासरितासागर
८. काव्यप्रकाश:
९. कालिकापुराणम्
१०. कुमारसंभवकाव्यम्
११. श्रीमद्भगवद्गीता
१२. गरुड़पुराणम्
१३. छत्रपतिसाम्राज्यम्
१४. छान्दोग्योपनिषद्
१५. तैत्तरीयोपनिषद्
१६. त्रिकाण्डशेष:
१७. देवीभागवतम्
१८. नानार्थरत्नमाला
१९. नानार्थ संग्रह:
२०. नैषधीयचरितम्
२१. पद्मपुराणम्
२२. पर्यायमुक्तावली
२३. भट्टिकाव्यम्
२४. भागवतपुराणम्
२५. महानिर्वाणतन्त्रम्
२६. महाभारत
२७. मार्कण्डेयपुराणम्
२८. मेदिनीकोश:
२९. मेघदूतम्
३०. यजुर्वेद:
३१. रघुवंशमहाकाव्यम्
३२. राजतरंगिणी
३३. रामचरितमानस
३४. वाल्मीकीय रामायणम्
३५. वाचस्पत्यम्
३६. वाजसनेय संहिता
३७. विश्वकोश:
३८. वैयाकरणसिद्धान्त कौमुदी
३९. व्याकरणशास्त्र का इतिहास
४०. शतपथब्राह्मण

४१. शब्दकल्पद्रुमः
४२. शब्दरत्नावली
४३. शारदीयाख्यनाममाला
४४. शिवमह्मिनस्तोत्रम्
४५. साहित्यदर्पणः
४६. सुश्रुतः
४७. हरिवंशपुराणम्
४८. हलायुधकोशः
४९. हारीतस्मृतिः
५०. हैमकोशः



## लेखक परिचय



**डॉ. ब्रह्मानन्द शुक्ल**

पिता : पं० शोभचन्द्र शुक्ल.

माता : श्रीमती सरला शुक्ला.

जन्मस्थान : ग्राम- बहेरिया, व्योहारी जि० शहडोल (म. प्र.)

जन्मतिथि : ०१.०१.१९५८.

शिक्षा (प्रारम्भिक/माध्यमिक) : गृह जनपद (म०प्र०)

उच्च शिक्षा : वाराणसी.

शैक्षिक योग्यता : व्याकरणाचार्य-वेदान्ताचार्य एम.ए. (संस्कृत) विद्यावारिधि (पी-एच्.डी.).

गुरु परम्परा : (दीक्षागुरु) अनन्तश्रीविभूषित जगद्‌गुरु रामानन्दाचार्य स्वामी रामनरेशाचार्य जी महाराज.

पण्डितराज रामप्रसाद त्रिपाठी. म.म. रामयत्न शुक्ल. डॉ. प्रभाकर मिश्र.

कार्यरत संस्था : २ फरवरी १९८३ से श्रीमती भागीरथी ट्रस्ट आदर्श संस्कृत महाविद्यालय, चुनार, मीरजापुर उ.प्र.

पद : व्याकरण विभागाध्यक्ष.

वर्तमान पद : प्रभारी प्राचार्य- उक्त महाविद्यालय.

शोध प्रबन्ध प्रस्तुति : राष्ट्रिय एवं अन्ताराष्ट्रिय २० शास्त्र संगोठिष्यों में सहभागिता एवं शोध प्रपत्रों की प्रस्तुति.

विगत १० वर्षों से 'अभिधा' नामक पत्रिका में लेखन-सम्पादन तथा प्रकाशन.

---

ISBN : 978-93-81999-38-7 सन् : २०१३ मूल्य : २५०/-




**शारदा संस्कृत संस्थान**

जगतगंज, वाराणसी-221 002

फोन : (0542) 2204168 (संस्थान) 2452037 (आवास)

e-mail: sharadabhawan@yahoo.co.in

website: www.sharadasansthan.in